मर्शात्तस्याः प्राधान्योपायता सूचिता। प्रतिज्ञातं चैतत् स्वयमेव सत्यप्रतिज्ञेन भगवता। तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति। सत्यप्रतिज्ञत्वं च स्वस्य श्रीमुखेनैवोक्तं वनपर्वणि द्रौपदीं प्रति। पतेद् द्यौर्हिमवान् शीर्य्येत् पृथिवी शकलीभवेत्। शुष्येत्तोयनिधिः कृष्णे! न मे मोघं वचो भवेदिति। वाल्मीकीयारण्यकाण्डे च, अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः। तदवश्यं मया कार्य्यमृषीणां परिपालनम्। अनुक्तेनापि वैदेहि प्रतिज्ञायाऽथ किं पुनरिति। सत्यप्रतिज्ञत्वादिगुणाश्रयत्वेऽप्यशक्तस्य सर्वे गुणा ह्यकिञ्चित्करा इत्याशङ्काव्यावृत्तये विशिनष्टि अनन्याधिपतेरिति। अन्योऽधिपतिर्य्यस्य सोऽन्याधिपतिः। नान्याधिपतिरनन्याधिपतिरिति तस्य।

तमीश्वराणां परमं महेश्वरं, तं देवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्। न तत्समोऽस्त्यभ्यधिकश्च दृश्यते। न तस्य कश्चित् पतिरस्ति लोके नचेशिता नैव च तस्य लिङ्गम्। न तस्य कश्चिज्जनिता नचाधिपः। स कारणं कारणाधिपाधिप इति। त्वं ब्रह्म परमं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्। आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे। एवमेतद्यथात्थ त्वमात्मानं परमेश्वर। भूतभावन भूतेश देवदेव जगत्पते। न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः। यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जयेत्यादिश्रुतिस्मृतिभ्यः। अतिशयसाम्यानर्ह-

स्वरूपगुणादिकस्येति यावत् । अत एव, महात्मन इति । महान् आत्मा स्वरूपं यस्येति यावत् । विश्वात्मत्वात् । अनेन सर्वजीवनिकायेङ्गितवेत्तृत्वमुक्तम् । असौ माम् अमायया प्रपन्नो भजति, प्रपत्तिव्याजेन वा मां वञ्चयतीति प्रत्यक्षं पश्यतीति भावः । यद्वा महांश्चासावात्मा च तथा । तस्य महत्त्वं च, औदार्य्यक्षमावात्सल्यसौशील्यादिमहद्गुणाश्रयत्वम् । अनेन भक्तिप्रपत्त्यङ्गानुष्ठानानर्हाणां तद्व्याजमात्रेणाऽपि भजतां निरतिशयकारुण्यौदार्य्यक्षमादिगुणपरवशतया तेषां गुणदोषादीन् अनवकलय्य भक्तिप्रपत्तिफलप्रदातृत्वमुक्तं भवति । किञ्च । प्रपत्तियोगस्य संयोगपृथक्त्वन्यायेन स्वातन्त्र्योपायत्वं, भक्त्याद्युत्पादकत्वं चाऽविरुद्धम् । तत्र स्वतन्त्रोपायत्वं पूर्वमेवोक्तम् । भक्तिसाधनत्वं चेदानीमुच्यते । ययेति । यया प्रपत्त्युद्बोधितया भगवत्कृपया भक्तिर्भवेदिति सामान्योक्तिस्तल्लक्षणं च निष्कामतया भगवत्सेवनम् । तथाच श्रुतिः । भक्तिरस्य भजनमिति, तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनमिति । व्याख्याता चेयं नारदपञ्चरात्रे, सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् । हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते इति । लिङ्गपुराणेऽपि । भज इत्येष वै धातुः सेवायां परिकीर्त्तितः । तस्मात् सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी । भजनं भक्तिरित्युक्तं वाङ्मनःकायकर्मभिरिति ।

प्रसङ्गाद्भक्तिविशेषा निरूप्यन्ते । सा च भक्तिर्द्विधा साधनरूपिका, फलरूपा चेति । अनेकजन्मानुष्ठितपुण्यपुञ्जोत्पन्नायाः साधनजन्यत्वात् साधनरूपिकेति विवेकः । तथाच जन्मान्तरसहस्रेषु तपोदानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते इति वचनात् । सा द्विधा, वैदिकपौराणिकादिभेदात् । तत्र वैदिकानुष्ठानरूपा मधुविद्याशाण्डिल्यविद्यासत्यविद्यादिः। तत्र

त्रैवर्णिकानामेवाधिकारस्तथोक्तमपशूद्राधिकरणे श्रीनिवासाचार्य्यचरणैः। पुराणोक्तरीत्या भगवदाराधनपरता द्वितीया। तत्र शूद्रोऽप्यधिक्रियते। यथा पाद्मे। सर्वेऽधिकारिणो ह्यत्र हरिभक्तौ यथा नृप इति। यद्वा पराभक्तेः साधनभूता साधनरूपिका। यथा पञ्चरात्रे सुरर्षे विहिता शास्त्रे हरिमुद्दिश्य या क्रिया। सैव भक्तिरिति प्रोक्ता यया भक्तिः परा भवेदिति। तत्र सामान्यक्रियाविधानात् सर्वेऽप्यधिक्रियन्ते। तथाच गीयते स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु। यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इत्यादि। अत्र, स्वे स्वे इति, मानव इति सामान्यपदप्रयोगादस्या अधिकारिणः सर्वसामान्यत्वं सूचितम्।

अथ कर्मयोगाद्यनुष्ठानरूपाज्ञापालनव्याजप्रसन्नेन भगवतादीयमाना त्वम्पदार्थविषयकात्मज्ञानोत्तरभाविनी भक्तिः फलरूपोच्यते। सैव परा प्रेमलक्षणा चेत्यादिशब्देनाभिधीयते। रूपादिविषयकेन्द्रियवृत्तिवदनवच्छिन्नस्वाभाविकभगवत्स्वरूपगुणादिविषयिका यावदात्मवृत्तिर्मनोवृत्तिः। २। या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान्मापसर्प्पतु इति। सैव ध्रुवा स्मृतिरुच्यते। आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरिति। श्रूयते। सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः। नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते। मच्चिता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति चेति भगवदुक्तेः। तस्या ज्ञानोत्तरभावित्वं च स्वयं गीतं श्रीमुखेन। ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। सैव श्रीभगवत्स्वरूपादिविषयकप्रत्यक्षानु-

भवद्धेतुरपि तत्रैवोच्यते । भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् इति । प्रवेशोऽत्र स्वस्य चेतनाचेतनात्मकविश्वस्य च ब्रह्मात्मकानुभवपूर्वकविश्वरूपे भगवति तच्छक्त्यात्मनाऽवस्थानम् । तत्त्वं च श्रीपार्थसारथिना दर्शितम् अर्ज्जुनाय । तेन तथैवानुभूय विस्तरेणोक्तम् । पश्यामि देवाँस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् । ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगाँश्च दिव्यानित्यादिना । एतदुक्तं भवति । विश्वरूपब्रह्मणः श्रीपुरुषोत्तमस्य विश्वात्मत्वेन विश्वजगतोऽधिकरणत्वाद् विश्वं जगत् तत्राऽवतिष्ठते शक्त्यात्मना । विष्णुधर्मोत्तरे, ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः । एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा । जगत्कार्यावसाने तु वियुज्यन्ते स्वतेजसेति । परापरात्मकशक्तिरूपत्वाच्च विश्वस्येति निर्विवादः । तथाच गीयते । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगदिति । तथैव सर्वाधिकारिणामधिकाररूपाः शक्तयस्तस्यैव तत्रैव तिष्ठन्ति । सृष्टिसमये तत्तदधिकारार्हाणां ब्राह्मरौद्रादिपदारोहणयोग्यानां तत्तज्जगत्स्रष्टृत्वसंहर्तृत्वादिशक्तिभिर्युनक्ति । प्रलये च तान् विश्वाधिकारिणस्ताभिर्वियुनक्ति । परं तु सर्वावस्थानस्य सार्वादिकत्वाविशेष एव । तथा मुक्तानामपि विश्वरूपे भगवति तदात्मकतयाऽवस्थानमविद्धम् । स एव भगवद्भावापत्तिलक्षणमोक्षः सायुज्यशब्देनाऽप्युच्यते । नच स्वरूपैक्यं सायुज्यमिति वाच्यम् । भेदस्यापि श्रवणात् । जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः, पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेतीति भेदज्ञानान्मोक्षश्रवणान्मोक्षेऽपि भेद उक्तः, तन्महिमानमिति इत्यनेन । स्पष्टं चान्यत्र । निरञ्जनः परमं साम्यमुपैति । व्या-

रूपातं श्रीमुखेनैतद्वाक्यं, मम साधर्म्यमागता इति। यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमेति। आह च श्रीपराशरः। निरस्तातिशयाह्लाद सुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मतेति। किञ्च सायुज्यशब्दस्य स्वरूपैकत्वेऽभ्युपगते, एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोतीति श्रुतिविरोधापत्तेः। न हि युगपत् क्रमेण वा अनेकदेवतासायुज्यसिद्धिः। एकेनैक्यापत्तौ पुनरन्यैः कथमैक्यमापद्यते। ऐक्यापन्नस्य पुनर्भेदासंभवात्। न च ब्रह्मविद् ब्रह्मैव भवतीति साधारणश्रुतेरैक्यविधानश्रवणादिति वाच्यम्। ब्रह्मात्मकत्वेन तत्त्वोपदेशस्याविरुद्धत्वात्। तच्चोक्तं पूर्वमेव अन्यथा ब्रह्मविदाप्नोति परमिति कर्मकर्तृव्यपदेशव्याकोपात्। अलं विस्तरेण। किञ्चोक्तलक्षणाया भक्तेः सत्सङ्गमूलत्वात् सत्सङ्गो नियतकर्मवद्यावन्मनोनैश्चल्यम् आवश्यकतयोक्तलक्षणभक्तीप्सुभिः कर्त्तव्यः। सतां लक्षणं च, भगवद्दिदृक्षातृणीकृतसर्वपुरुषार्थकत्वे सति भगवदाज्ञाविरुद्धाचारशून्यत्वं, तन्नियोगकैङ्कर्य्यपुरुषार्थपरत्वे सति अन्यपुरुषार्थेच्छाकालुष्याभावत्वं वा। यथा। पाद्मे कार्तिकमाहात्म्ये। वरं देव मोक्षं न मोक्षावधिं वा न चान्यं वृणेऽहं वरेशादपीह। इदं ते वपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः। कुवेरात्मजौ बद्धमूर्त्यैव यद्वत् त्वया मोचितौ भक्तिभाजौ कृतौ च। तथा प्रेमभक्तिं स्वकां मे प्रयच्छ, न मोक्षे ग्रहो मेऽस्ति दामोदरेह। हयशीर्षीयनारायणव्यूहस्तवे, न धर्मं काममर्थं वा मोक्षं वा वरदेश्वर। प्रार्थये तव पादाब्जे दास्यमेवाभिकामये। पुनस्तत्रैव। पुनःपुनर्वरान् दित्सुर्विष्णुर्मुक्तिं न याचितः। भक्तिरेव वृता येन प्रह्लादं तं नमाम्यहम्। वैष्णवे प्रह्लादः। कृतकृत्योऽस्मि भगवन् वरेणानेन यत् त्वयि। भवत्री त्वत्प्रसादेन भ-

क्तिरव्यभिचारिणी । धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता । समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि । तत्रैव बालकान् प्रति । तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते । समाश्रिताद् ब्रह्मतरोरनन्तान्निःसंशयं यास्यथ वै महत्फलम् इत्युक्तिस्तु तेषां प्रवर्त्तनार्थिका, न स्वेच्छाविषयिकेति बोध्यम् । अन्यथा पूर्वापरवाक्यविरोधापत्तेः । पञ्चरात्रे च । धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन । त्वत्पादपङ्कजस्याधो जीवितं दीयतां मम । मोक्षं सालोक्यसामीप्यं प्रार्थये न धराधर । इच्छामीह महाभाग कारुण्यं तव सुव्रतेत्यादि । एतादृशानामेकान्तभक्तानां दर्शनादिनैव पुरुषार्थाप्तिः, किं पुनर्दीर्घकालसंगत्येति कैमुत्यन्यायमाह शास्त्रं तेषां दौर्लभ्यं द्योतयद् । यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रतिष्ठिता । तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः । पौष्करे । दुर्लभा भगवद्योगभाविनो भुवि मानवाः । तद्दर्शनात् तदालापात् सुलभं शाश्वतं पदमिति । नैतदाश्चर्यमत्र शङ्कनीयम् । तत्र पुरुषोत्तमस्य सदैव सान्निध्यश्रवणात् । सन्धिं च यागं सन्धत्ते ब्रह्मणेदृशो रमते तस्मिन् नु जीर्णे शयाने नैनं जहात्यहःसु पूर्व्येष्विति तैत्तिरीयाः । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । न त्यजेयं कथञ्चन । यन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः । विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिक इति । नारायणेति यस्याऽऽस्ये वर्त्तते नाममङ्गलम् । नारायणस्तमन्वास्ते वत्सं गौरिव वत्सलेति स्मृतयश्चेति । च्यवननहुषसंवादे च । संभाषो दर्शनस्पर्शः कीर्तनं स्मरणं तथा । पावनानि किलैतानि साधूनामिति शुश्रुम । सेव्याः श्रेयोर्थिभिः सन्तः पुण्यतीर्थफलोपमाः । क्षणोपासनयोगोऽपि न तेषां निष्फलो भवेत् । साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः । कालेन फलते तीर्थं सद्यः साधुसमाग इति । सद्भिरेव

सहासीत सद्भिः कुर्वीतसङ्गमम्। सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेदिति । अहन्यहनि धर्मस्य योनिः साधुसमागमः । मोहजालस्य योनिर्हि मूढैः सह समागम इत्याद्यनुसन्धेयाः। किञ्चोक्तलक्षणा भागवता भगवतोऽप्याधिक्येन सेवनीयाः। मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् । तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषत इति भगवदुक्तेः । तस्माद्विष्णुप्रसादाय वैष्णवान् परितोषयेत् । प्रसादसुमुखो विष्णुस्तेनैव स्यान्न संशय इति व्यासवचनात् । सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम् । न संशयस्तु तद्भक्तपरिचर्य्यारतात्मनाम् । केवलं भगवत्पादसेवया निर्मलं मनः । न जायते तथा नित्यतद्भक्तचरणार्चनादिति शाण्डिल्यस्मृतेश्च । किञ्च, अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः । इन्द्रियार्थेषु वैराग्यमनहंकार एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् । असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु । नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु । मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि । अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् । एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथेति । एतेषां सर्वसाधनौपयिकत्वात् पूर्वोक्तलक्षणमुमुक्षुणाऽभ्युपगन्तव्योऽमानित्वादिरिति ॥ ९ ॥

इति श्रीभगवत्पुरुषोत्तमाचार्य्यविरचितायां वेदान्तरत्नमञ्जूषायां
सिद्धान्तविवृत्तौ साधनसंग्रहाधारो नाम
तृतीयकोष्ठिका समाप्ता ॥ ३ ॥

एवं तावत् पूर्वस्मिन् प्रकरणे साधनकदम्बः संग्रहेण निरूपितः । इदानीमत्र फलविवक्षया सर्वशास्त्रार्थं संगृह्णन् पूर्वप्रतिपादितमर्थं संग्रहेण संस्मारयति अल्पबुद्धीनामुपकारार्थं भगवान् ग्रन्थकारः—

**उपास्यरूपं तदुपासकस्य च**
**कृपाफलं भक्तिरसस्ततः परम् ॥**
**विरोधिनो रूपमथैतदाप्ते-**
**र्ज्ञेया इमेऽर्था अपि पञ्चसाधुभिः ॥ १० ॥**

उपास्यरूपमित्यादि । इमे पञ्चाप्यर्थाः साधुभिर्ज्ञेया इत्यन्वयः । तत्रोपास्यस्य भगवतः श्रीपुरुषोत्तमस्य रूपं स्वाभाविकाचिन्त्यानन्तापरिसंख्येययावदात्मवृत्तिसार्वज्ञादिवात्सल्यकारुण्यसौशील्यादिकल्याणगुणाश्रयत्वं सर्वशरण्यत्वं जगज्जन्मादिकारणत्वं शास्त्रयोनित्वं मोक्षप्रदातृत्वं मुक्तप्राप्यत्वं सर्वोपास्यत्वं सर्वनियन्तृत्वं विश्वात्मत्वम् अतिशयसाम्यानर्हमहिमैश्वर्यत्वम् अनन्तानवद्यप्रकाशात्मकनिरतिशयमार्दवयौवनसौन्दर्यादिदिव्यगुणनिलययोगिध्येयदिव्यमङ्गलविग्रहवत्त्वं चेति, स्वभावतोऽपास्तसमस्तदोषमित्यादिना प्रतिपादितम् । १ । तदुपासकस्येति । तस्य भगवत उपासको यो जीवात्मकदम्बस्तस्य रूपमिति शेषः । देहेन्द्रियमनःप्राणधीभ्यो विलक्षणत्वं, ज्ञानस्वरूपत्वे सति ज्ञानाश्रयत्वं, श्रीभगवदायत्तस्वरूपस्थितिप्रवृत्तिकत्वं प्रतिक्षेत्रभिन्नत्वमणुपरिमाणकत्वं भगवत्प्रपन्नत्वादि । तदप्युक्तम्—ज्ञानस्वरूपमित्यादिना २ । कृपाफलमिति । भगवत्कृपायाः फलं मोक्षलक्षणं सर्वकर्मध्वंसाभावपूर्वकसमस्तनिःशेषाऽविद्यानिवृत्त्यात्मकपरिपूर्णयावदात्मभाविब्रह्मस्वरूपादिविषयकानुभूतिसन्ततिर्मुक्तिरिति तदेव भगवद्भावापत्तिसायुज्यसाम्यादिशब्दैरभिधीयते। आह चैवं

श्रीपराशरः । निरस्तातिशयाह्लादसुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मतेति। परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति श्रुतेः। ३। भक्तिरस इति। भक्ते रसः प्रेमानन्दः फलरूपा भक्तिरिति यावत्। तथा पञ्चरात्रे, मनोगतिरविच्छिन्ना हरिप्रेमपरिप्लुता। अभिसन्धिविनिर्मुक्ता भक्तिर्विष्णुवशंकरीति। यद्वा भक्तिरसः। भक्त्या रस्यतेऽनुभूयते इति श्रीभगवत्साक्षात्कारानुभवो भक्तिरेनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसीति श्रुतेः। भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुनेति गानाच्च। उपलक्षणं चैतत् सर्वोपायानां कर्मज्ञानभक्तिप्रपत्त्यादिरूपणामिति यावत्। अनेन भगवद्भावापत्तिलक्षणमोक्षप्राप्तिक्रमो विवक्षितः। तथाहि प्रथमं जायमाने पुंसि भगवत्कृपाकटाक्षस्ततो जन्मनैव सात्त्विको भूत्वा मुमुक्षुः स्यात्। तथा च नारायणीये। जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः। पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः। रजसा तमसा चैव मानसं समभिप्लुतमिति। मुमुक्षायां च सत्यां तत्साधने यतते। ततः कर्मज्ञानादिसाधनेनाप्याराधितः पुरुषोत्तमः प्रसीदति। परभक्तिपरज्ञानयोरेकतरं व्याजीकृत्य आत्मानं दर्शयति तस्मै मुमुक्षवे। ततः श्रीभगवत्साक्षात्कारानुभवेन तद्भावापन्नो भवतीति संक्षेपः। ज्ञानभक्तिमतामेव भगवत्प्रेष्ठत्वेन तत्प्रसादजन्यसाक्षात्कारेण मोक्षभागित्वमिति भावः। तथा च गीयते भगवता, तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। ज्ञानी त्वात्मैव मे मतम्। सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रिय इति। शुभाशुभपरित्यागी भक्तिमान् मे प्रियो नर इत्यादि। यस्य देवे परा भक्तिरिति श्रुतेः। स एव भगवत्प्रसादविषयः। कुर्वतस्ते प्रसन्नोऽहं भक्ति-

मभिचारिणीमिति स्मरणात् । तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतमिति । सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययमिति। यमेवैष वृणुते तेन लभ्यः, तस्यैष आत्मा वृणुते तनुं स्वाम् । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति श्रुतिस्मृतिभ्यः । एतच्च श्रीनिवासाचार्य्यचरणैः श्रीवेदान्तपारिजातसौरभभाष्ये निगदभाषितं, नात्र विस्तार्य्यते । ४ । अथैतदाप्तेर्विरोधिनो रूपमिति । एतस्य श्रीरमाकान्तस्य भगवतः प्राप्तेर्विरोधिनो रूपं, विरोधि द्विविधम् । सामान्यविशेषभेदात् । तत्र विशेषा उच्यन्ते । आत्मस्वरूपान्यथाभावदार्ढ्यहेतुत्वात् ।

तत्र तावत् स्वस्वरूपज्ञाने विरोधिनो ह्यात्मज्ञानद्वारा भगवत्प्राप्तिप्रतिबन्धको देहेन्द्रियमनोबुद्धिष्वनात्मस्वाऽऽत्माऽध्यवसायः।भगवन्तं गुरुं चर्ते ह्यात्मनोऽन्यपारतन्त्र्याभिमानः। आत्मनो भगवदीयत्वेऽसंभावनादि।श्रुतिस्मृत्यात्मकभगवदीयाज्ञोपेक्षा।अन्यदेवतार्चनवन्दननमस्कारादि। असच्छास्त्राभिलाषा। आत्मस्वातन्त्र्यभावनम्। अहङ्कारममकारभावदार्ढ्यं चेत्येवमादयः। तथाच असुर्या नाम ते लोका अन्धेन तमसा वृताः । ताँस्ते प्रेत्याऽभिगच्छन्ति ये के चात्महनो जनाः । नचेदवेदीन्महती विनष्टिरित्यादिश्रुतेः । योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा इत्यादिस्मृतेश्च । १ । किञ्च भगवति देवतान्तरसाम्यभावः । ब्रह्मादिदेवतान्तरवर्गे परत्वबुद्धिः । श्रीभगवदवतारेषु मानुष्यति-

र्थस्क्त्यादिभावः । भगवदर्चाविग्रहेषु श्रीशालिग्रामादिषु पाषाण-लोहमयत्वानीशत्वाचेतनत्वादिभावः । भगवदीयमन्त्रादौ शब्दसामान्यभावः । भगवदीयगाथायां लौकिकाख्यानसादृश्यकल्पना । अनन्तानवद्यस्वाभाविकाचिन्त्ययावदात्मभाविकल्याणगुणाकरेपर-ब्रह्मणि श्रीवासुदेवे निर्गुणत्वमायिकगुणवत्त्वादिभावना चेत्यादयो भगवत्स्वरूपतिरोधानेन तत्प्राप्तिप्रतिबन्धकाः । यो वै स्वां देवतामतियजति परस्यायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथ इत्यादि-श्रुतेः । प्रजापतिस्मृतौ । नारायणं परित्यज्य हृदिस्थं प्रभुमीश्वरम् । योऽन्यमर्चयते देवं परबुद्ध्या स पापभाक् । भारते च सप्तर्षिसंवादे विष्णुं ब्रह्मण्यदेवेशं देवदेवं जनार्दनम् । त्रैलोक्यस्थितिसंहारसृष्टिहेतुं निरञ्जनम् । आधातारं विधातारं सन्धातारं जगद्गुरुम् । विहाय स भजत्यन्यं विषस्तैन्यं करोति य इत्यादि । अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो ममाव्ययमनुत्तमम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता इति । यो विष्णोः प्रतिमाकारे लोहबुद्धिं करोति वा । यो गुरौ मानुषं भावमुभौ नरकपातिनाविति स्मृतेः । न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । यः सर्वज्ञः सर्ववित् । अनन्तकल्याणगुणात्मकोऽसावित्यादिप्रमाणानि क्रमेणात्रानुसन्धेयानि । २ । किञ्च, स्वदोषबाहुल्यानुसन्धानेन भगवति भारपातभिया तत्प्रपत्त्याद्युपाये लाघवकल्पना । प्रपत्त्यै विश्वासाभावः । साधनान्तरनिष्ठा । मन्त्रान्तरपरिग्रहः । श्रीभगवन्मन्त्रजपपूजादिलक्षणकैङ्कर्य्यात्कामान्तराभिलाषा । भगवदाज्ञापालनरूपस्वधर्माचारलक्षणपरिचर्य्यायां स्वपुरुषार्थसाधनत्वाभिमानः । श्रीभगवद्रूपे बहिर्यामिणि गुरौ मर्त्यबु-

न्द्धिः । तत्रैव गौरवखिलत्वादयश्चोपायहानिद्वारा तत्प्राप्तिप्रतिबन्धकाः । उपायनाशहेतुत्वात् । एतेषां च श्रीगुरौ गौरवविश्वासाद्यभावमूलककृतघ्नताहेतुकत्वात् सर्वेषां गुरुशिक्षितत्वेन गुरुभक्तिनाशान्नाशः । गुरुभक्तेरुपायस्य च व्याप्तेरव्यभिचारश्रवणात् । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इत्यादिसावधारणश्रुतेः । तस्माद्गुरौ नान्यथाभाव आरोपणीयः । तथा च गुरुरेव परं ब्रह्म गुरुरेव परा गतिः । स हि विद्यां जनयति तच्छ्रेष्ठं जन्म तस्मै न द्रुह्येत्कदाचनेति श्रुतेः । एकाक्षरप्रदातारमाचार्य्यं योऽवमन्यते । शुनो योनिशतं प्राप्य चाण्डालेषु प्रजायते । यो विष्णोः प्रतिमाकारे लोहबुद्धिं करोति वा । यो गुरौ मानुषं भावमुभौ नरकपातिनावित्यादिस्मृतेश्च । ३ । किञ्च धर्मादित्रिवर्गे पुरुषार्थबुद्ध्या तत्प्राप्तीप्सा, भगवत्परिचर्य्यादिक्रियानुष्ठाने स्वस्वातन्त्र्यभावना । यथेष्टाचारेण शास्त्रविरुद्धतया प्रवृत्तिश्चेत्येते फलविरोधितया भगवत्प्राप्तिप्रतिबन्धकाः । अन्नं पानं धनं वस्त्रमायुरैश्वर्य्यमास्पदम् । आपद्यपि न याचेत पूजकः पुरुषोत्तमम् । नाप्रसन्नो ददाम्येतद् याचितोऽपि दिने दिने । अयाचितोऽपि तत्सर्वं प्रसन्नो विदधाम्यहम् । याचितोऽपि सदा भक्तैर्नाहितं कारयेद्धरिः । बालमग्नौ पतन्तं तु माता किं न निवारयेत् । तत्पादभक्तिज्ञानाभ्यां फलमन्यत्कदाचन । न याचेत् पुरुषो विष्णुं याचनान्नश्यति ध्रुवम् । अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः । हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयने ममापि विष्णुः । वेदोक्तं ये परित्यज्य धर्ममन्यं प्रकुर्वते । तत्सर्वं तव दैत्येन्द्र मत्प्रसादाद् भविष्यति । यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् । तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ । ज्ञात्वा शास्त्र-

विधानोक्तं कर्म कर्तुमिहार्हसीत्यादिवचनेभ्यः । ४ । किञ्च देहादौ बहुकालावस्थानेच्छा, श्रीभगवतो भागवतानां चाभिजात्याद्यभिमानेन बुद्धिपूर्वकावज्ञाद्यपराधाचरणं ह्यसतां सङ्गतिश्च सद्यः साक्षात् प्रतिबन्धका निरयप्राप्तिहेतवो महता प्रयत्नेन वर्जनीयाः । नाभिनन्देत मरणं नाभिनन्देत जीवितम् । कालमेव प्रतिक्षेत निर्वेशं भृतको यथा । प्रायशः पापकारित्वान्मृत्योरुद्विजते जनः । कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिमिति व्यासोक्तेः । न च मां योऽभ्यसूयति इति गीतायाम् । हरिवंशे श्रीवामनो बलिं प्रति, पुण्यं मद्द्वेषिणां यच्च मद्भक्तद्वेषिणां तथा । कथासु मम दैत्येश कथ्यमानासु तत्र वै । अशृण्वन् यो नरो गच्छेत् तस्य संवत्सरार्जितम् । यत्नेन महता तात तत्पुण्यं ते भविष्यतीति । वनपर्वणि दुर्वासाः शिष्यान् प्रति । वृथा पापेन राजर्षेरपराधः कृतो महान् । मास्मानक्षुधान् दृष्ट्वा पाण्डवाः क्षुरचक्षुषा । स्मृत्वाऽनुभावं राजर्षेरम्बरीषस्य धीमतः । बिभेमि सुतरां विप्रा हरिपादाश्रयाज्जनात् । पाण्डवाश्च महात्मानः सर्वे धर्मपरायणाः । सदाचारता नित्यं वासुदेवपरायणाः । क्रुद्धास्ते निर्दहेयुर्वै तूलराशिमिवानलः । तत एतानदृष्ट्वैव शिष्याः शीघ्रं पलायतेति । वैष्णवे प्रह्लादः । मयि दोषाऽनुबन्धोऽभूत्संस्तुतावुद्यते तव । मत्पितुस्तत्कृतं पापं देव तस्य विनश्यतु । त्वयि भक्तिमतो द्वेषादघं तत्संभवं च यत् । त्वत्प्रसादात् प्रभो सर्वं तेन मुच्येत मे पितेति । नेदंविद अनिदंविदान् समुद्दिशेन्न सह भुञ्जीत नावसथमाविश्यादिति बह्वृचां समाम्नायः । कात्यायनसंहितायाम् । वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसम् । विष्णुरहस्ये । आलिङ्गनं वरं मन्ये व्यालव्याघ्रजलौकसाम् । न सङ्गः शल्ययुक्तानां नानादेवोपसेविनाम् । अन्यत्रापि, शैवान् पाशुपतान् स्पृष्ट्वा लौकायतिक-

नास्तिकान् । अकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत् । शाण्डिल्यस्मृतौ च । मूढैः पापरतैः क्रूरैः सदागमपराङ्मुखैः । संबन्धं नाचरेद् भक्तो नश्यते तैस्तु संगमात् । पितृगीते च । मा जनिष्ट स नो वंशे जातो वा प्राग्विनश्यताम् । आजन्ममरणं यस्य वासुदेवो न दैवतमिति । विष्णुपुराणे च । पुंसां जरामरणमौढ्यवतां वृथैव मोघाशिनामखिलशौचबहिष्कृतानाम् । तोयप्रदानपितृपिण्डनिराकृतानां संभाषणादपि नरा नरकं प्रयान्ति । पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान् । हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् । धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः । वैडालव्रतिको ज्ञेयो हिंस्रः सर्वातिवञ्चकः । अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकवृत्तिचरो द्विज इति । मूर्खाश्च पण्डितम्मन्या अधर्मा धार्मिका इव । धर्मयुक्तान् प्रबाधन्ते साधूनां लिङ्गमाश्रिता इति शाण्डिल्यवचनादित्याद्यन्यदपि शास्त्रमत्रानुसंधेयम् ॥

अथ सामान्यभूता उच्यन्ते । तत्र मर्यादोल्लङ्घनं, श्रुतिस्मृती ममैवाज्ञे इति । स्वोचितधर्मत्यागो, वर्णान्तरोचितधर्माचारश्च । नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात् तस्य परित्यागस्तामसः परिकीर्तितः । ऋग्यजुःसामसंज्ञेयं त्रयीवर्णावृतिर्द्विज । एतामुज्झति यो मोहात् स नग्नः पातकी स्मृतः । ब्रह्मचारीगृहस्थश्च वानप्रस्थस्तथाऽऽश्रमी । परिव्राट् च चतुर्थोऽत्र पञ्चमो नोपपद्यते । संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत् कुरुते कर्म न तस्य फलभाग् भवेत् । नास्तिक्यपरमाश्चैव केचिद्धर्मविलोपकाः । भविष्यन्ति नरा मूढा मन्दाः पण्डितमानिनः । वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यत् तत्तोषकारणम् । वेदोक्तं ये परित्यज्य धर्म-

मन्यं प्रकुर्वते। तत्सर्वं तव दैत्येन्द्र मत्प्रसादाद् भविष्यतीत्यादिवाक्येभ्योऽन्वयव्यतिरेकगर्भितेभ्यः। कृतघ्नत्वं तथाह मनुः। गोघ्ने चैव सुरापे च चौरे भग्नव्रते तथा। निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः। सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये। तान् मृतानपि क्रव्यादाः कृतघ्नान् नोपभुञ्जते इत्यादि। मानुष्यं लब्ध्वा तस्य निरर्थकं शूकरादिवन्नाशनम्। मानुष्यं प्राप्य लोकेऽस्मिन् मूको वा बधिरोऽपि वा। नापक्रामति संसारात् स खलु ब्रह्महा भवेत्। वाराहे च। लब्ध्वाऽत्र मानुषं देहं पञ्चभूतसमन्वितम्। मामेव न प्रपद्यन्ते ततो दुःखतरं नु किम्। नारसिंहे च। शुभमिदमुपलभ्य मानुषत्वं सुकृतशतेन वृथेन्द्रियार्थहेतोः। रचयति कुरुते न मोक्षमार्गं स दहति चन्दनमाशुभस्महेतोरिति। स्ववीर्य्यविक्रयणं च। यथा स्ववान्तमश्नाति श्वा वै नित्यं स्वभूतये। एवं ते वान्तमश्नन्ति स्ववीर्य्यस्योपसेचनादिति सनत्सुजातवचनात्। तच्च द्विविधं बाह्याभ्यन्तरभेदात्। बाह्यं परस्त्रीगमनादि। कृष्णाजिनपरिग्राही रेतसश्चैव विक्रयी। गजच्छायानुभोक्ता च न भूयः पुरुषो भवेदित्यादि। द्वितीयं विद्यादिगुणविक्रयणम्। पण्डितैरर्थकार्पण्यात् पण्यस्त्रीभिरिव स्वयम्। आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृत इत्यादिस्मृतेः। विद्याबलेन जिगीषया ब्राह्मणाद्यपमानम्। वादेन ब्राह्मणं जित्वा हृष्टो भवति यो द्विजः। श्मशाने पादपः स स्याद् गृध्रकङ्कनिषेवितः। गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः। अरण्ये निर्जले स्थाने स भवेद् ब्रह्मराक्षस इति। भगवदाराधनात् प्राग्भक्षणपानादि। यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम्। भुङ्क्ते स याति नरकान् शूकरेष्वभिजायते। संन्यासादिविधिं विहाय वैराग्यहीनैः पुरुषैर्द्वेषादिहेतुना मातृपितृपरित्यागः। पितरं मातरं वापि तथा

दत्ताभयं सुतम् । त्यजेच्च तरुणीं भार्यां तं विद्याद्ब्रह्मघातकम् । किञ्च, विद्याचौरो गुरुद्रोही वेदेश्वरविदूषकः । त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः । परद्रोहेष्वभिध्यानं मनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्च त्रिविधं मानसं स्मृतम् । पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः । अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् । अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च शारीरं त्रिविधं स्मृतम् इत्यादीन्यन्यान्यप्यूहनीयानि विरोधिरूपाणि । तानि च प्रपत्तिचिन्तामणौ स्मृतानि । आसुरी संपच्च । तथा च गीयते, द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे श्रृणु । प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते । असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसंभूतं किमन्यत् कामहैतुकम् । एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः । काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः । मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः । चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः । कामोपभोगपरमा एतावदिति निश्चिताः । आशापाशशतैर्बद्धाः कामक्रोधपरायणाः । ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् । इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् । इदमस्तीदमपि मे भविष्यति पुनर्धनम् । असौ मया हतः शत्रुर्हनिष्ये चापरानपि । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी । आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः । अनेकचित्तविभ्रान्ता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ । आत्मसंभाविताः स्तब्धा धनमानमदान्विताः । यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् । अहंकारं बलं दर्पं कामं

क्रोधं च संश्रिताः । मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् । त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् । एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः । आचरत्यात्मनः श्रेयस्ततो याति परां गतिमित्यादिना । अत्र च, दैवीसंपद्विमोक्षाय निबन्धायाऽऽसुरी मता इति फलसहितं संपद्द्वयमुक्रम्य, दैवीं संपदमनूद्यासुरीं संपदमभिजातानामासुराणां, प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा इत्यादिना लक्षणं निरूप्य, ईहन्ते कामभोगार्थमन्यायेनार्थसंचयानित्यादिना तेषां प्रवृत्तिं चोक्त्वा, तानहं द्विषतः क्रूरान् संसारेषु नराधमानित्यादिना नित्यसंसृतिरूपाधोगतिं तत्फलं च विधाय तस्मादेतत्त्रयं त्यजेदिति तत्त्रयमूलकत्वादासुरभावस्य तत्त्यागो विधीयते श्रीमुखेनैव । भूयश्च एतैर्विमुक्तः कौन्तेय इत्यनेन व्यतिरेकतया तदेव दृढीकृत्य तत्त्यागस्य श्रेयोऽर्थिनोऽधिकारित्वोपयोगिकत्वमुक्तं भवति । तस्मादत्यन्तश्रेयोविरोधित्वाच्छ्रेयोर्थिभिर्मुमुक्षुभिः प्रयत्नेन त्याज्येति षोडशाध्यायस्याभिप्रायः । अनेनैव प्रतिकूलस्य वर्जनमिति प्रपत्तेरङ्गं व्याख्यातं भवति ॥

अथ विरागो निरूप्यते । स च द्विविधः, सहेतुको निर्हेतुकश्चेति । तत्र स्वीयरागविषयीभूतानां निरतिशयप्रेष्ठत्वेनाभिमतानां पुत्रकलत्रवित्तैश्वर्यादिपदार्थानां वियोगेन तद्विपरीतत्वेनाभिमतानां दरिद्राणां लाभेन च हेतुना जातः सहेतुकः । स चाविवेकपूर्वकत्वाद् व्यभिचारयुक्तोऽपायशङ्काग्रस्तः । यदि श्रीभगवतो निर्हेतुकाऽपरिमितकरुणासागरस्य रमाकान्तस्य कृपाकटाक्षसहकृतश्चेत् तर्हि भगवत्परिपूर्णकृपापात्राणाम्–अनन्याश्चिन्तयन्तो मां ये जनाः प-

पर्युपासते । तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः । अहमेव गतिस्तेषां निराशीःकर्मकारिणामित्यादिश्रीमुखोक्तलक्षणसंपन्नानां महाभागवतानां ज्ञानवैराग्यभूषितानां भक्तिसागरनिमग्नमनस्कानां जातसंगस्तत्कृपाविषयो भूत्वा शास्त्रीयमार्गे प्रवृत्तस्तेन मार्गेण भगवन्तं भजँस्तद्दार्ढ्यार्थं भूयो भूयो यतते, ह्यनुतिष्ठते च तदानुकूल्यम् । अन्यथानैकान्तस्वभावत्वादसत्सङ्गेन भ्रश्यते मार्गात् । द्वितीयस्तु जन्मान्तरसहस्रार्जितपुण्यपुञ्जस्य मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये इति भगवद्वचनान्मनुष्याणां कोटिष्वपि कस्यचिदेकतमस्य जन्मसमये श्रीपुरुषोत्तमदयाकटाक्षावलोकितस्य पुरुषत्वे चाविस्तरामात्मा स हि विज्ञानेन संपन्नतमो विज्ञातं च वदति विज्ञातं पश्यति श्वस्तनं वेद लोकालोकौ मर्त्येनाऽमृतत्वमीप्सत्येव संपन्नोऽथेतरेषां पशूनामशनायापिपासा एवाभिज्ञानमिति ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत्ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिताऽन्नमदामेति । ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति । पुरुषो वा व सुकृतमिति । अत्र जन्मसहस्राणां सहस्रैरपि सत्तम । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् । गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे । स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् । कर्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मभूते । अवाप्य तां कर्ममहीमनन्ते तमालयं ते त्वमलाः प्रयान्तीत्यादिश्रुतिस्मृतिश्लाघ्यतमं मानुष्यं प्राप्तस्य पुंसो विक्षेपासहिष्णुतया शैशवादेव प्रवृत्तौ ग्लानिबुद्धेः श्रवणादिपरायणस्य सत्प्रसङ्गलब्धकथाश्रवणतः कर्मफलानां दुःखात्मनां श्रुत्वा वर्तमानशरीरेऽपि प्राप्तानि दुः-

खानि स्वस्य परेषां च भूयो भूयो जगति कर्मवशीभूतानां क्षेत्रज्ञानां जन्ममरणादिरूपचक्रभ्रमणात्मकं दुःखमनुभूय जातवैपथुशरीरमनस्कस्य मुमुक्षोर्जायमानो विरागो निर्हेतुकः। स च विवेकजन्यत्वान्मोक्षौपयिकोऽव्यभिचरितस्वभावः। तत्र दुःखं तावद् द्विविधम्—अवस्थारूपं, तापात्मकं चेति। आद्यं च प्रथमं हि पितृमूत्रद्वारान्निःसृत्य मातृयोनिप्रवेशः। ततो गर्भेऽनुदिनकललबुद्बुदपिण्डकाठिन्यादिव्यवस्थापत्तिः। ततः क्रमेणावयवेन्द्रियादियोगस्ततश्चेतनीभावः। ततः स्वकर्मवैषम्येण मातृपितृरजोरेतोवैषम्यनिरूपितस्त्रीपुरुषषण्ढभावापत्तिरर्वाक्शिरा ऊर्ध्वपाज्जरायुवेष्टितो भूत्वा मलमूत्रागारे विष्ठाक्रिमिभिः सह वासः। प्रसवसमये योनिद्वारं प्राप्य यन्त्रेण पीड्यमान इव मूर्च्छितः पूतिव्रणात् कृमिवन्महता दुःखेन महीपतनम्। ततश्च कौमाराद्यवस्थानुभवपूर्वकमरणम्। यदि धार्मिकश्चेत्तर्हि स्वर्गं गत्वा स्वपुण्यार्जितं विषयसुखं, पापार्जितं मात्सर्यासूयादिदुःखं चानुभूय धूममार्गेण पुनरावृत्य व्रीह्यादिभावापत्तिः। ततः पेषणपाकभक्षणाद्यवस्थोद्भवक्लेशानुभवपूर्वकं पुनः पितृरेतोभावापत्तिर्भूयो भूय उक्तप्रकारेण मातृगर्भप्रवेशादि। तदेव संसारचक्रभ्रमणं शास्त्रमुखेनोच्यते। दुष्कर्मा चेन्नरकादिप्राप्तिः श्वशूकरसरीसृपस्थावरादियोनिप्राप्तिस्तद्दुःखानुभूतिश्चेति गर्भोपनिषदि निपुणं प्रोक्तम्।

अथ द्वितीयं त्रिधा— आध्यात्मिकमाधिदैविकमाधिभौतिकं चेति। तत्राद्यं द्विविधं शारीरकमानसभेदात्। तत्र शिरोऽक्षिरोगज्वरादिकम्। शारीरकं कामक्रोधभयद्वेषलोभमोहविषादशोकाऽसूयावमानेर्ष्यादिजन्यं च मानसम्। शीतोष्णवातवर्षाजलविद्युदादिसमुद्भवमाधिदैविकम्। मृगपक्षिमनुष्यराक्षससर्पादिजन्यमाधिभौतिकमिति विवेकः। पुनश्च प्रकारान्तरेण त्रि-

रागो द्विधा, जिहासोद्भवः सद्योजातश्च। आद्यः सौभरिणा प्रोक्तः । पञ्चां गता यौवनिनश्च जाता दारैश्च संयोगगताः प्रसूताः । दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा । द्रक्ष्यामि तेषामपि चेत् प्रसूतिं मनोरथो मे भविता ततोऽन्यः । पूर्णोऽपि तत्राप्यपरस्य जन्म निवार्य्यते केन मनोरथस्येत्यारभ्य । यथा हि भूयः परिहीनदोषो जनस्य दुःखैर्भविता न दुःखी । सर्वस्य धातारमचिन्त्यरूपमणोरणीयांसमतिप्रमाणम् । सितासितं चेश्वरमीश्वराणामाराधयिष्ये तपसैव विष्णुमित्यन्तेन। द्वितीयो ययातिवत् सद्योजायमानः । तथा तेनैव गीतम् । न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते । या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः । तां तृष्णां संत्यजन् प्राज्ञः सुखेनैवाभिपूर्य्यते । जीर्यन्ति जीर्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः । धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्यति । पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः । तथाऽप्यनुदिनं तृष्णा ममैतेष्वनुजायते । तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् । निर्द्वन्द्वो निर्म्ममो भूत्वा चरिष्यामि मृगैः सहेत्यादिना । ननु वैराग्यादीनां साधनौपयिकानां प्रतिकूलवर्जनादीनां साधनाङ्गरूपाणां च दुष्करत्वात् कलिदूषितानामद्यतनानां सर्वसाधनयोगाभावेन कथं श्रेय इति चेत् । सत्यम् । साधनानामत्यन्तदुष्करत्वेऽपि तद्व्याजेन यथाशक्तिश्रद्धादिमत्तया भजतां निजाऽसाधारणस्वाभाविकाचिन्त्यकारुण्याद् दुराचारिणामप्यात्मानन्यसाधनानां स्वयमेवोक्तगुणपारवश्येनानुगृह्णात्येव श्रीपुरुषोत्तमो दीनानुकम्पिस्वभावादेव । अयं भावः । न तावत् साधनानां स्वस्वफलदाने स्वातन्त्र्यम्, अपि तु भगवदायत्तप्रवृत्तिकत्वेनैव सर्वेषामपि साधनानां भगवदनुग्रहसापेक्षत्वश्रवणात् । शृण्वन्तोऽपि

बहवो यं न विदुः । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामित्यन्वयव्यतिरेकश्रुतिभ्यः ।

किञ्च । न हि भगवतो ह्यनन्यभक्तानां पापादिकर्मनिराकरणस्य भारत्वेनाशक्यत्वम् । अनन्ताविचिन्त्यस्वाभाविकयावदात्मवृत्तिसर्वशक्तियोगात् । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः । ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा । इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् । पृथिव्यां राक्षसान् सर्वान् पिशाचांश्च सदानवान् । अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर इत्यन्वयव्यतिरेकवचनात् । कामक्रोधादीनामप्यासुरत्वाविशेषात् तद्धननेन को वा प्रयास इति भावः । तस्मादनन्यशरणानां स्वीयानां केनापि बलिष्ठेन कर्मणा दुराचारित्वेऽपि निरतिशयकारुण्यक्षमावात्सल्यादिगुणवशीभूतो गोविन्दस्तद्गुणानां पोषणार्थं मातृपितृमित्रपत्यादिवत् सर्वापराधकदम्बं सोढ्वा तान् वृणोत्येव । सर्वसम्बन्धयोगात् । त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव । पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देवसोढुमित्यादिवचनात् । दुराचारानुग्राह्यत्वं स्वयमेव गीतम् । अपि चेत् सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः । क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति । अस्यार्थः । अपिचेदिति । अपि, अनन्यभक्तानां दुराचारत्वासम्भव एवेति सम्भावनापरोऽयम्—अपिचेच्छब्दः । चेद्यदि केन चिज्जन्मान्तरीयेण बलीयसा कर्मणा वैदिकाचारविरोधिनाऽन्त्यजादिसमुद्भवं शरीरं प्रापित

उत्तमाधिकारार्हकुलजन्माऽपि दुःसङ्गादिबलिष्ठकर्मणा भगवदीयापचारात्मकपापेन सत्संप्रदायोक्ताचारप्रतिबन्धकेन वर्णाश्रमादिधर्मात्पातितो वा दुराचारशब्दवाच्यः । उभयथापि संप्राप्तवैदिकाचारानर्ह इति यावत् । न तु उत्तमाधिकारार्होऽपि यथेष्टाचारेण वर्तमानोऽत्र विवक्षितः । तस्यासुरकोटिसन्निविष्टत्वात् । यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिमिति निषेधस्मरणात् । तथाप्यनन्यभाग् मां भजते इति । अन्यसाधनान्यप्रयोजनान्यसंबन्धशून्यः । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेकं शरणं व्रज । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते । तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता । अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते । ममैवांशो जीवलोके जीवभूतः सनातनः । मद्भक्त एतद् विज्ञाय मद्भावायोपपद्यते । यो मद्भक्तः स मे प्रियः ।

इति मत्वा भजन्ते मां बुधा भावसमन्विता इति मदुक्तप्रकारेण सर्वसाधनं सर्वयोगक्षेमकर्तारं मुक्तप्राप्यं तद्भोग्यं सर्वसंबन्धाश्रयं मुमुक्षुध्येयं मां निश्चित्य सर्वात्मना भजते सेवते स साधुरेव मन्तव्यः । एकान्तभक्त एव व्यवसितव्यः । तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः । अहमेव गतिस्तेषामिति भगवदुक्त्यैकान्तिलक्षणसंपन्नत्वात् । तत्र हेतुमाह । सम्यग्व्यवसितो हि स इति । यतः स सम्यग्व्यवसाययुक्तः । एतदुक्तं भवति । सर्वमुमुक्षुध्येयो जगज्जन्मादिहेतुर्वेदैकप्रमाणगम्यो वेदप्रतिपाद्यो मुक्तप्राप्यो भगवाञ्छ्रीपुरुषोत्तमो रमानिवासो मदुपायोपेयसंबन्धरूपो, नान्यः कश्चि-

त्व साध्यसाधनसंबन्धवत्त्वेन मया समाश्रयणीयोऽस्ति। यद्यपि मम पापरूपकर्मणा वैदिकाधिकारयोग्यता नाभूत्, प्रत्युताधःपाताऽर्हो ह्यभवं, तथापि तेन निरतिशयदयाकारुण्यातिविक्षात्वात्सल्यादिगुणवरुणालयेन भगवता स्वाऽसाधारणगुणपारवश्यान्निर्हेतुककारुण्येनैव स्वानन्यभजनार्हमानुषभावं प्रापयित्वा स्वनियम्यभूतैर्मदीयात्मशरीरेन्द्रियादिभिरात्मानं भाजयित्वा स्वदीनानुकम्पितस्वभावप्रसिद्धये मां स्वानन्यभक्ततया ख्यापयति। तस्मात्तदुपकृतिं शिरसि निधाय स एवापारकारुण्यसिन्धुः सर्वात्मना मया भजनीय इति। किञ्च सर्वेषां साधनानां देवादीनां च लोके विघ्नकर्तृतया प्रसिद्धानां मदुपेक्षितत्वात् ते कोपिताः सन्तो यदि भगवत्प्राप्तिप्रतिबन्धकीभूतान् विघ्नान् करिष्यन्ति, कामं कुर्वन्तु सर्वाचिन्त्यशक्त्याश्रयेण विश्वात्मना सर्वान्तर्यामिणैव सर्वविघ्ननिवृत्तिपूर्वकं स्वप्राप्तिः कारयिष्यते एव। मदीयप्रबलपापकर्मवशाद् यदि कञ्चित्कालमुपेक्षते चेत्, का क्षितिः। कालान्तरे मेरुतुल्यं मत्कर्म स्वप्राप्तिप्रतिबन्धकीभूतं परमाणुवत् कृत्वाऽवश्यमनुग्रहीष्यत्येवेति व्यवसाययुक्त इत्यर्थः। अनेन विश्वासात्मकेन दृढनिश्चयेन क्षिप्रमेव धर्मात्मा भवति। महाभागवतलक्षणसंपन्नो भवति। ततः शश्वच्छान्तिं मद्भावापत्तिलक्षणां मुक्तिं प्राप्नोति। मद्भावायोपपद्यते। मम साधर्म्यमागता इति भगवद्वचनात्। न तस्य कदापि नाशशङ्का कार्य्येत्याह। हे कौन्तेय त्वं प्रतिजानीहि। किं प्रतिजानीयामित्यपेक्षायामाह। न मे भक्तः प्रणश्यतीति। मम कारुण्यवात्सल्यसौहार्दक्षमादीनानुकम्पासौशील्यसर्वशरण्यत्वाद्यनन्तकल्याणगुणगणसागरस्य सत्यसंकल्पस्य निरतिशयसौन्दर्यमाधुर्य्यादिमूर्त्तेर्ज्ञानैश्वर्य्यादिषाड्गुण्यनिधेः श्रीपुरुषोत्तमस्य श्रीदामविप्रमित्रस्य गोपीजननयनोत्सवस्य पार्थसारथेर्भगवतो माधवस्य भक्तो

दुराचारसंपन्नोऽनन्यशरणः सर्वसाधनहीनोऽपि न प्रणश्यति । आत्मनोऽनन्यत्वान्न भ्रश्यते । अपि तु क्रमेण मुच्यते एवेति । तथैवोक्तं श्रीसात्वते । दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा । समाश्रयेदादिदेवं श्रद्धया शरणं हि यः । निर्दोषं विद्धि तं जन्तुं प्रभावात् परमात्मनः । वैष्णवधर्मे च । अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन । मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवाम्भसा । मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः । केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति । नारसिंहे च । भगवति हरावनन्यचेताः भृशमलिनोऽपि विराजते मनुष्यः । न हि शशकलुषच्छविः कदाचित्तिमिरपराभवतामुपैति चन्द्रः । पुण्डरीकाख्याने च । अश्वमेधशतैरिष्ट्वा वाजपेयशतैरपि । न प्राप्नुवन्ति सुगतिं नारायणपराङ्मुखाः । ये नृशंसा दुरात्मानः पापाचाररतास्तथा । तेऽपि यान्ति परं धाम नारायणपदाश्रया इत्यन्वयव्यतिरेकवचनात् । या वै साधनसंपत्तिः पुरुपार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रय इत्यन्योऽपि वाक्यकदम्बोऽत्रानुसन्धेयः ॥ १० ॥

मन्दानामुपकाराय तुष्टये तत्त्वदर्शिनाम् ॥
श्रीकृष्णप्रीतयेऽयं मे कृतो वेदान्तसंग्रहः ॥ १ ॥
प्रसीदतु रमाकान्तो गोपीजनमनोहरः ।
करोतु जगतां श्रेयो मङ्गलायतनो हरिः ॥ २ ॥
यः श्रीनिवासोऽखिलवेदज्ञेयो
न यत्स्वरूपं प्रविशन्ति तर्काः ।
यो ध्यानयोगेन विशुद्धसत्त्वै-
र्दृष्टो मुकुन्दो ह्युपयामि तं गुरुम् ॥ ३ ॥

हरिः ॐ तत्सदिति श्रीभगवत्पुरुषोत्तमाचार्यविरचितायां वेदान्तरत्नमञ्जूषायां सिद्धान्तरत्नविवृत्तौ फलादिरत्नसंग्रहो नाम तुरीयकोष्ठः ॥ ४ ॥

समाप्तोऽयं वेदान्तरत्नमञ्जूषाख्यो ग्रन्थः ॥

श्रीराधाकृष्णाय नमः।

श्रीमते भगवन्निम्बार्काय नमः।

# वेदान्ततत्त्वबोधः।

## पण्डितप्रवरश्रीमदनन्तरामविरचितः।

यश्चिन्तितो हरति ध्वान्तमशेषमन्तर्बोधप्रदस्तरणिकोटिसमप्रभो वै॥ योऽज्ञानवादविभवां हि ददाह काशीं तं श्रीसुदर्शनमहं हृदि चिन्तयामि॥१॥ किं वेदान्ततत्त्वमिति प्रश्ने उच्यते। सार्वज्ञाद्यनन्तकल्याणगुणाब्धिरनन्तशक्तिर्जगतो जन्माद्यभिन्ननिमित्तोपादानकारणं चेतनाचेतनवस्तुस्वाभाविकभेदाभेदसम्बन्धाश्रयः परब्रह्म परमात्मा पुरुषोत्तमादिशब्दाभिधेयः श्रीकृष्ण एवेति सर्ववेदान्तार्थः। तथाच शास्त्रं— यः सर्वज्ञः सर्ववित्, सर्वस्य शरणं सुहृत्, एष एवाऽचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, सर्वांल्लोकानीशत ईशनीभिः। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्याद्याः श्रुतयः, विवक्षितगुणोपपत्तेश्च, सर्वधर्मोपपत्तेश्च सर्वोपेता च, जन्माद्यस्य यतः, प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधाद् इत्यादिसूत्राणि। तेजोबलैश्वर्य्यमहाऽवबोधस्ववीर्यशक्त्यादिगुणैकराशिः *। कर्मक्लेशविपाकाद्यैरस्पृष्टस्याखिलेशितुः ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः *। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते *। वेदैश्च सर्वैरहमेव वेद्य इत्यादिस्मृतयश्च। तथा भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् *

प्रधानक्षेत्रज्ञपतिर्गुणेशः, अथातो ब्रह्मजिज्ञासेत्यादिशास्त्राच्चोक्त-भोग्यनियन्तृरूपजिज्ञासुजिज्ञासाजिज्ञास्यरूपचिदचिदीश्वराऽऽत्मक-तत्त्वत्रयसिद्धिः । एवञ्च सत्यं ज्ञानमनन्तं ब्रह्म बृंहति बृंहयति तस्मा-दुच्यते परं ब्रह्म, एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूता-न्तरात्मा * कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुण-श्च, सूक्ष्माच्च यत्सूक्ष्मतरं विभाति * यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, अणोरणीयान्महतो महीयान्, तस्मात् कृष्ण एव परो देवस्तं ध्यायेदित्यादि, यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन ए-वं वाऽरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव, अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश, अणु-र्ह्येष आत्मा यं वा एते सिनीतः पुण्यं पापं च, वालाग्रशतभाग-स्य शतधा कल्पितस्य च * भागो जीवः स विज्ञेयः स चाऽनन्त्या-य कल्पते, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विद-धाति कामान्, गौरनाद्यन्तवती जनित्री भूतभाविनी, सितासिता च रक्ता च सर्वकामदुघा विभोः, अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं स्वरूपामित्यादिश्रुतिभ्यः । द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणी भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः, अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्राम-यन् सर्वभूतानि यन्त्रारूढानि मायया । तत्र यः परमात्मा तु स नि-त्यो निर्गुणः स्मृतः । कर्मात्मा त्वपरो योऽसौ कर्मबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः । अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम । न सन्ति प्राणिनो यत्र निजकर्मनिबन्धनाः । न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्या-

ध्यामः सर्वे वयमतः परम् । दैवी ह्येषा गुणमयी मम माया दुरत्यया मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । त्रिगुणं तज्जगद्योनिरऽनादिप्रभावाप्ययम्।अचेतना परार्था च नित्या सततविक्रिया इत्यादिस्मृतिभ्यश्च चिदचिदीश्वराणां त्रयाणां स्वरूपस्वभाववैलक्षण्यसिद्धिः । पुनः, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, आत्मा वा इदमेक एवाग्र आसीद्, एको ह वै नारायण आसीत्, तत्त्वमसि अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म, त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि देवते, तदात्मानमेवावेदाऽहं ब्रह्माऽस्मीत्यादिशास्त्रेण चिदचितोर्ब्रह्मतादात्म्यमुपदिश्यते । एवञ्चोभयविध–वाक्यानां परस्परं बाध्यबाधकभावो वक्तुं नैव शक्यः । तुल्यबलत्वात् । तस्मात् सर्वेषां वाक्यानां स्वार्थे प्रामाण्यसिद्धये स्वाभाविकभिन्नाऽभिन्नं ब्रह्म सूत्रकृद्भिर्निर्णीतम्। तेनाभिप्रायेण घटकसूत्राणि प्रणीतवान् अंशो नानाव्यपदेशादन्यथाचाऽपि दाशकितवादित्वमधीयते एके, उभयव्यपदेशात् त्वहिकुण्डलवत्, प्रकाशाश्रयवद्वा तेजस्त्वादित्यादीनि । तस्मात् स्वाभाविकभेदाभेद एव सूत्रकारसम्मतः । अत्यन्तभेदोऽत्यन्ताभेदश्च भ्रान्तिरिति निश्चीयते ॥

ननु यदुक्तं– चिदचितोर्ब्रह्मणा स्वाभाविकभेदाभेद एव सम्बन्धो, नान्य इति । तदाग्रहमात्रम्। यतः केवलद्वैतस्य केवलाद्वैतस्य चापि शास्त्रे सत्त्वात् । तत्प्रवर्तकानां चाऽऽचार्यत्वाविशेषेण तन्निषेधायोगादिति चेन्न। द्वैतविषयकाणामद्वैतविषयकाणां चोभयविधवाक्यानां शास्त्रे सत्त्वेपि तेषामितरेतरबाध्यबाधकभावायोगादुभयेषां तुल्यबलत्वादित्युक्तमेव । एकतरबाधं विना एकतरस्याऽसिद्धेश्च । एवञ्च केवलद्वैतवादिभिस्तादृशभेदसिद्ध्यर्थं नैयायिकवद् ब्रह्मणो जगदुपादानत्वं नाङ्गीक्रियते, किन्तु निमित्तत्वमात्रमेवेति । तथा सति तन्मते, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्

यं, तदैक्षत बहु स्यां प्रजायेय, नामरूपे व्याकरवाणि, त्रिवृतं त्रिवृतं करवाणि, तत्सृष्ट्वा तदेवानुप्राविशत्, सच्च त्यच्चाभवत्, आत्मैवेदं सर्वं, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अयमात्मा ब्रह्म, ऐतदात्म्यमिदं सर्वम् इत्यादिश्रुतीनां, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्, आत्मकृतेः परिणामात्, तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिसूत्राणाम् अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव, बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते, वासुदेवः सर्वमिति स महात्मा सुदुर्लभः, सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः * इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः* वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च, क्षेत्रज्ञं चापि मां विद्धित्यादिस्मृतीनां च सर्वोपादानत्वसर्वात्मत्वप्रतिपादिकानां बाध एव जायते ॥

किञ्च ब्रह्मणो निमित्तमात्रत्वाङ्गीकारे श्रुत्युक्तयोः प्रतिज्ञादृष्टान्तयोरपि बाधो निश्चितो भवति। प्रतिज्ञादृष्टान्तौ यथा, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति प्रतिज्ञा, यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्, यथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादिति दृष्टान्तः। न हि निमित्तमात्रज्ञानेन कार्यजातं विज्ञातं भवतीति शक्यते वक्तुम् । कुलालादिज्ञानेन मृदादिविकारजातवत् सर्वानुभवविरोधात् । उपादानत्वे तु उपादानोपादेययोस्तादात्म्याद्युक्तं तज्ज्ञानेन तज्ज्ञानमिति ब्रह्मण उपादानत्वाऽङ्गीकारे च मृद्घटवत् सुवर्णकुण्डलादिवच्च जगद्ब्रह्मणोरभेदोऽप्यवर्ज्जनीयः। नच तथात्वे विकारित्वपत्तिरिति वाच्यम्। शक्तिविक्षेपलक्षणपरिणामाऽङ्गीकारात्, स्वरूपे परिणामाऽनभ्युपगमाच्च। यथोर्णनाभिः सृजते गृह्णते च, यथा सतः पुरुषात् केशलोमानि, यथा पृथिव्या ओषधयः सम्भवन्ति तथाऽक्षरात् सम्भवतीह

विश्वमिति श्रुतेः । प्रसार्य्य च यथाङ्गानि कूर्मः संहरते पुनः । तद्वद्भूतानि भूतात्मा सृष्टानि ग्रसते पुनरिति भीष्मवाक्याच्च । अपिचात्यन्तभिन्नयोरभेदासम्भवाच्चिदचितोर्ब्रह्मतादात्म्यप्रतिपादकमुक्तशास्त्रं विरोधादेव परित्यक्तं स्यात् ॥

किञ्च, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेत्यादिना ब्रह्मणोऽन्यपदार्थस्यात्यन्तभिन्नज्ञातुर्निन्दाश्रवणादतः केवलाद्वैतवादिमतमसङ्गतमिति निश्चीयते ॥

तथैव केवलाद्वैतवादिमतमसङ्गतम् । तथाहि सजातीयविजातीयस्वगतभेदशून्यं सर्वधर्मविनिर्मुक्तं शुद्धं मुक्तस्वरूपं चिन्मात्रं वस्तु परमार्थं नान्यदिति तेषां मतम् । तदनुपपन्नम् । विकल्पाऽसहत्वात् । तद्यथा । उक्ताऽद्वितीयनिर्विशेषवस्तुनः सत्त्वे किञ्चित्प्रमाणमस्ति न वेति वक्तव्यम् । नाद्यो वक्तुम् शक्यः । तत्र न तावत् प्रत्यक्षम् । अतीन्द्रियत्वात्तस्य । नाप्यनुमानं लिङ्गशून्यत्वात् । नेन्द्रियाणि, नानुमानमितिश्रुतेः । नापि शब्दः शब्दवृत्त्यविषयत्वात् । तत्र न तावच्छक्तिविषयत्वं, जातिगुणाकारप्रकृतिप्रत्ययाद्यर्थत्वाभावात् । नापि लक्षणाविषयत्वं, सम्बन्धशून्यत्वात् । असङ्गो ह्ययं पुरुष इति श्रुतेः । ननु सत्यसम्बन्धाभावेऽपि शाखाचन्द्रवत् कल्पितसम्बन्धस्य सत्त्वान्न दोष इति चेन्न । दृष्टान्तवैषम्यात् । तथाहि । शाखाचन्द्रयोरुभयोरपि साऽवयवत्वात् प्रत्यक्षविषयत्वात् किरणद्वारा सम्बन्धस्यापि सत्त्वात्, दार्ष्टान्तेऽत्यन्तवैपरीत्यान्नोक्तार्थसिद्धिः । नापि गौण्या विषयत्वं, निर्गुणत्वात् । विषयत्वाङ्गीकारे च मिथ्यात्वप्रसङ्गः । द्वैतापत्तिश्च । तथा प्रयोगः—ब्रह्म मिथ्या, प्रमाणविषयत्वात् । तव मते प्रपञ्चवदिति । नापि द्वितीयः । सर्वप्रमाणहीनत्वेन शशशृङ्गतुल्यत्वापत्तेः । निर्विशेषं ब्रह्म अवस्तु, सर्वप्रमाणशून्यत्वात् । शशशृङ्गाद्यवस्तुजातवदित्यनुमानात् । ननु तस्य

स्वयम्प्रकाशत्वात् प्रमाणान्तरानपेक्षतया स्वानुभूत्येकमानत्वान्नोक्तदोषयोग इतिचेन्न । शास्त्रवैयर्थ्यप्रसङ्गात् । तथाहि । निर्विशेषाऽद्वितीयस्य दोषस्पर्शाभावाद्बन्धाभावस्तदभावान्मोक्षाऽभावस्तदभावे मोक्षतत्साधनप्रतिपादकशास्त्रस्य सुतरां वैयर्थ्यम् ।

किञ्च तत्र धर्म्ममात्रानङ्गीकारे तदितरवस्तुमात्रानङ्गीकारे च तदैक्षत बहु स्यां प्रजायेय, ब्रह्मैवेदमग्र आसीत्, स चात्मानं वेदाऽहं ब्रह्मास्मीति, सोऽकामयत बहु स्यां प्रजायेय, नामरूपे व्याकरवाणि, यतो वा इमानि भूतानि जायन्त इत्यादि, यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयन्तपः, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, सर्वे वेदा यत्पदमामनन्ति, तं त्वौपनिषदं पुरुषं पृच्छामि, जन्माद्यस्य यतः, विवक्षितगुणोपपत्तेश्च, सर्वोपेता च, शास्त्रयोनित्वादित्यादीनाम्, अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते वेदैश्च सर्वैरहमेव वेद्य इत्यादीनामीक्षणकर्तृत्वबहुभवनसङ्कल्पाद्याश्रयत्व-जगज्जन्मादिकारणत्व-गुणशक्त्यादिमत्त्व-शास्त्रवेद्यत्वादिप्रतिपादकानाम्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति, ज्ञाऽज्ञौ द्वावजावीशानीशौ, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, अक्षरात् परतः परः, प्रधानक्षेत्रज्ञपतिर्गुणेशः, पृथगात्मानं प्रेरितारं च मत्वा, गौरनाद्यन्तवती जनित्री भूतभाविनी, अजामेकां लोहितशुक्लकृष्णां, शारीरश्चोभयेऽपि भेदेनैनमधीयते, भेदव्यपदेशाच्चान्यः, अधिकं तु भेदनिर्देशात्, न त्वेवाऽहं जातु नासं न त्वं नेमे जनाधिपाः, न चैव न भविष्यामः सर्वे वयमतः परम्, भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च, अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा, अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे

पराम्, जीवभूतां महाबाहो ययेदं धार्य्यते जगत्, ममैवांशो जीवलोके जीवभूतः सनातनः, प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः, न लिप्यते फलैश्चापि पद्मपत्रमिवाऽम्भसा, कर्मात्मा त्वपरो यो ऽसौ कर्मबन्धैः स युज्यते, स सप्तदशकेनाऽपि राशिना युज्यते पुनः, त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्, अचेतना परार्था च नित्या सततविक्रिया, दैवी ह्येषा गुणमयी मम माया दुरत्यया, मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इत्यादीनां च ब्रह्मभिन्नत्वेन क्षेत्रक्षेत्रज्ञप्रधानपुरुषप्रकृतिपुरुषजीवमायादिशब्दाभिधेययोर्वस्तुनोरऽजत्वमायावश्यत्वतन्मुक्तत्वेश्वरसखित्वकर्मफलभोक्तृत्वानित्यत्वनानात्वशक्तिरूपांशत्वकर्मबन्धार्हत्वतन्मोक्षार्हत्वानाद्यनन्तत्वगुणत्रयाश्रयत्वजडत्वपरिणामित्वदुरत्ययत्वादिप्रतिपादकानां श्रुतिस्मृतिसूत्राणां बाधाच्छास्त्रबहिर्भूतत्वप्रसङ्गो दुर्वारः ॥

ननु व्यवहारकाले सर्वस्योक्तद्वैतस्यास्माकमङ्गीकारात्तद्विषयत्वेन भेदशास्त्रस्य नैराकाङ्क्ष्यान्न बाधः । तथाचोक्तं— जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा *अविद्या तच्चितोर्योगः षडस्माकमनादय इति । नच तर्हि द्वैतापत्त्याऽद्वैतसिद्धान्तभङ्ग इति वाच्यम् । अनादिसान्तत्वाभ्युपगमात् । नचैवं विशुद्धचितोऽपि सान्तत्वापत्तिरिति वाच्यम् । तस्याऽज्ञानबाध्यत्वाऽभावात् । नचाऽनादित्वाऽविशेषाद् बाध्यत्वाबाध्यत्वयोर्नियामकाभाव इति वाच्यम् । आरोपितत्वानारोपितत्वयोरेव बाध्यत्वाबाध्यत्वयोर्नियामकत्वात् । एतदुक्तं भवति । बन्धस्य सत्यत्वाङ्गीकारे तस्य निवृत्त्ययोगान्मोक्षशास्त्रवैयर्थ्यं प्रसज्ज्येत । ज्ञानमात्रनिवर्त्यस्य क्वाऽपि सत्यत्वाऽदर्शनात् । सत्यस्य चात्मनो निवृत्त्यदर्शनाच्च । अतोऽध्यस्तत्वमङ्गीकर्त्तव्यम् एवञ्चाऽविद्याकार्य्याहङ्काराध्यासाज्जीवेश्वरादिव्यवहार-

सिद्ध्या तदनुवादपरत्वाद्भेदशास्त्रस्य नैराकाङ्क्ष्यात् । यथेदं रजतमिति- प्रतीतिविषयशुक्तावारोपितरजतस्य शुक्तिस्वरूपसाक्षात्कारान्नेदं रजतं, किन्तु शुक्तिका हि रजतवदवभासते इति बाधो जायते। तथाऽनाद्यविद्यया शुद्धात्मस्वरूपाज्ञानात्तस्मिन्नधिष्ठानभूतेऽध्यस्तं द्वैतजातप्रपञ्चं मिथ्याभूतं, तस्य पुनरात्मैकत्वविज्ञानेन निवृत्त्या, नाद्वैतसिद्धान्ते कोऽपि विरोधः॥ तथाचाऽऽह भाष्यकारः॥ तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । एवमयमनादिरनन्तो नैसर्गिको मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्त्तकः सर्वलोकप्रत्यक्षः । अस्याऽनर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते इति । अन्यथा, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, तत्त्वमसि, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदित्यादीनामद्वैतप्रतिपादकानां भेदप्रतिषेधकानां च व्याकोपः स्यादितिचेन्न ॥ सर्वथानुपपन्नत्वात् । तथाहि । यदुक्तं बन्धस्य सत्यत्वे तस्य निवृत्त्ययोगान्मोक्षशास्त्रवैयर्थ्यं प्रसज्ज्येतेति । तन्मन्दम् । प्रमाणज्ञानाभावात् । भूयश्चान्ते विश्वमायानिवृत्तिरिति शास्त्रप्रामाण्यात् सत्यस्यैव बन्धस्य निवृत्त्या मोक्षशास्त्रस्य सार्थक्यात् सत्यस्य निवृत्तिर्न भवतीति दुराग्रहमात्रम् । सत्यस्यैव धनवस्त्रादेर्दानादिना निवृत्तिदर्शनात् । सत्यस्यैव मलपङ्कादेः प्रक्षालनादिना निवृत्तिदर्शनात् । नच ज्ञानमात्रनिवर्त्यस्य क्वापि सत्यत्वादर्शनादित्युक्तमेवेति वाच्यम्, सेतुदर्शनेन सत्यस्यैव पापस्यनाशदर्शनात् ॥

ननु तस्य श्रद्धानियमादिसापेक्षज्ञाननाश्यत्वाद् बन्धस्य च, नान्यः पन्था विद्यतेऽयनाय इति श्रुत्या ज्ञानमात्रान्निवृत्तिप्रतीतेः । अतः श्रुतज्ञाननिवर्त्यत्वनिर्वाहार्थमध्यस्तत्वं वर्णनीयमितिचेन्न । त्वयापि विवेकादीनां ब्रह्मज्ञानसाधारणकारणतयाऽधिकारिविशेषणत्वेनापेक्षितत्वात् । अन्यथा सर्वेषां संसारिणां साधनं विनैव ज्ञानापत्त्या सर्वमोक्षप्रसङ्गात् ।

नाऽपि निर्विशेषाद्वितीयचेतनमात्रस्य वस्तुनोऽधिष्ठानत्वं सम्भवति सामान्यविशेषधर्मवत्त्वस्याधिष्ठानत्वप्रयोजकत्वात् सामान्येन ज्ञातं विशेषेणाज्ञातमेवाधिष्ठानं लोके प्रसिद्धम्। यथेदं रजतमित्यत्रेदन्तासामान्यधर्म्मो रजतस्य साधकः शुक्तौ वर्तते। शुक्तित्वं च विशेषधर्मस्तस्य बाधकः सर्वानुभवप्रसिद्धः। न तथा निर्धर्म्मके चिन्मात्रे उभयधर्मवत्त्वं वक्तुं शक्यं, सिद्धान्तभङ्गात् । कथञ्चित् सामान्यधर्म्माङ्गीकारेऽपि विशेषधर्म्माऽनङ्गीकारेण तद्बाधायोगाच्च ।

ननु बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं विषयाभेदेनाभिव्यक्तं स्फुरणं शुभकर्मजन्यवृत्तिव्यक्तमानन्द इत्येवं वृत्त्युपाधिकृतभेदाज्ज्ञानादीनामात्मधर्मत्वव्यपदेशः। तदुक्तं टीकायाम्—आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्म्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवाभासन्त इतीति चेन्न। तुच्छोक्तेः। बुद्ध्यादीनां तद्वृत्तीनां च सत्यत्वे सिद्धान्तभङ्गः। असत्त्वे उक्तर्थासिद्धेः। नच तेषां कल्पितत्वमिति वाच्यम्। अधिष्ठानकल्पकादेरेवाभावात् कल्पितत्वस्य का वार्त्ता। ग्रामाऽभावे सीमावत् ॥

किंचाज्ञानस्याश्रयविषयप्रयोजकाभावादप्यध्यासाभावः। तत्राऽज्ञानस्याश्रयो ज्ञानमात्रं ब्रह्मैव जीवो वाऽन्यद्वा। नाद्यः। ज्ञानमात्रस्वयंज्योतिषो वस्तुनोऽज्ञानाश्रयत्वानर्हत्वात्। सूर्यस्यान्धकाराश्रयत्वमनुन्मत्तः को ब्रवीतीति भावः। नाऽपि जीवः। तस्याध्यासका-

र्यत्वेन तदुत्तरभावित्वात् । न तृतीयः । उभयभिन्नचेतनस्यादृष्टश्रुतत्वात् । तथा को वाऽज्ञानविषयः– शुद्धानुभवमात्रम्, उत तद्भिन्नम् । नाद्यः । तस्य भवन्मते ज्ञानाविषयत्वेनाज्ञानविषयत्वानर्हत्वात् । अज्ञानतन्निवर्तकज्ञानयोरेकाधिकरण्यवदेकविषयस्यापि नियमात् । न द्वितीयः । ज्ञानाज्ञानोभयभिन्नस्य तदानीमभावात् । तद्भिन्नस्य सर्वस्याऽपि तत्कार्यत्वेन तद्विषयत्वायोगात् । ननु गृहोदरस्थितमसो यथा गृहमेवाश्रयो विषयश्चेति प्रत्यक्षसिद्धं, तथाऽत्राऽपि शुद्धं ब्रह्मैवाज्ञानस्याश्रयो विषयश्चेति चेन्न । दृष्टान्तवैषम्यात् । गृहतमसोरज्ञानरूपत्वेनेतरेतराविरोधित्वात् । दार्ष्टान्तिके तु ज्ञानाज्ञानयोरत्यन्तविजातीयत्वेनेतरेतरविरोधित्वात् । न हि सूर्यस्यान्धकाराश्रयत्वं तद्विषयत्वं वा कोटिचतुर्मुखैरपि संभावयितुं शक्यम् । किञ्चाऽध्यासोपादानं ब्रह्मणि यदज्ञानमङ्गीकृतं तत्स्वप्रयुक्तं ब्रह्मप्रयुक्तमन्यप्रयुक्तं वेति विवेचनीयम् । नाद्यः । आत्माश्रयदोषप्रसङ्गात् । जडस्य प्रयोक्तृत्वासम्भवाच्च । अन्यथा घटादावपि प्रयोक्तृत्वापत्तेः । न द्वितीयः । प्रयोक्तृत्वस्य कर्तृत्वविशेषधर्मत्वात् तस्य त्वन्मतेऽध्यासवत्पुरुषाश्रयत्वाच्छुद्धे तदसम्भवात् ।

अपिच देवतिर्यङ्मनुष्यनारक्यादियोनिप्राप्तिरूपानर्थहेतोरविद्यायाः स्वरूपं शुद्धं ब्रह्म जानाति न वा । जानाति चेत्तथा ज्ञात्वा को वा अकर्मवश्यः स्वतन्त्रस्तामात्मनि प्रयुञ्ज्याद् । ज्ञातृत्वापत्त्या भवन्मते शुद्धत्वहानेश्च । न जानाति चेदज्ञतापत्त्या ब्रह्मत्वाऽसिद्धेः । शुद्धं चिन्मात्रं न ब्रह्म, असत्त्वात् संसारिजीववदित्यनुमानात् । नाऽपि तृतीयः । उभयेतरवस्त्वनङ्गीकारात् । अङ्गीकारे च तत्राप्युक्तयुक्त्या प्रयोजकान्तरं, तस्याऽप्यन्यदित्यनवस्थापत्तेः ॥

किंचाऽज्ञानस्य सत्त्वमसत्त्वं वा । नाद्यः । भवतामनङ्गीकारात् । न द्वितीयः । असत आवरकत्वासम्भवात् । अधिष्ठानाऽऽवरणा-

ऽभावे अध्यासाभावः। न हि शुक्तिस्वरूपे भासमाने रजताऽऽरोपो भवतीति भावः॥

किंच स्वप्रकाशे आवरणासम्भवेऽपि अध्यासार्थं दुराग्रहेण तदङ्गीकारे च किं तद् ब्रह्मस्वरूपावरकं तद्धर्मविशेषावरकं वेति वाच्यम्। नाद्यः। जगदान्ध्यप्रसङ्गात्। न द्वितीयः। स्वरूपेतरधर्मा-ऽनङ्गीकारात्। अन्यथा सिद्धान्तभङ्गप्रसङ्गात्। ननु निर्विशेष-श्रुतिबाधभयाद्भिन्नधर्मानङ्गीकारेऽपि स्वरूपस्यैवानन्दांशमात्रस्या-ऽज्ञानावृतत्वेऽपि सत्तांशस्यानावृतत्वान्नोक्तदोषयोग इति चेन्न। असम्भवात्। निरवयवे वस्तुन्यंशादिकल्पनाया अन्याय्यत्वात्। सांशत्वापत्त्या मिथ्यात्वापत्तेश्च। ब्रह्म मिथ्या, सांशत्वात्। घटा-दिवदित्यनुमानात्। निरवयवशब्दव्याकोपात्। निर्विशेष-वादभङ्गाच्च॥

ननु यदुक्तं स्वयंप्रकाशस्वरूपस्यात्मनोऽज्ञानाश्रयत्वानर्हत्वा-दिति। तत् सत्यम्, तथापि अज्ञानस्य मिथ्यात्वाङ्गीकारन्नोक्तदोष-स्पर्शावकाशः। तथाचोक्तं भाष्यकृद्भिः। मिथ्याज्ञाननिमित्त इति प्रचण्डमार्त्तण्डमण्डले पेचकानुभवसिद्धान्धकारवद् अहमज्ञ इत्यनु-भवसिद्धमज्ञानं दुरपह्नवम्। कल्पितस्याधिष्ठानास्पर्शित्वात्। नित्य-स्वरूपज्ञानस्याविरोधित्वाच्चेतिचेत्सत्यम्। प्रचण्डमार्त्तण्डमण्डले पेच-कानुभवसिद्धान्धकारवदिति दृष्टान्तस्य तथा स्वप्रकाशे परब्रह्मण्यपि अज्ञानकल्पका उलूकसदृशा एव ज्ञेया इति दार्ष्टान्तिकस्य वक्तव्य-त्वात्। असमदिष्टत्वाच्च। यच्चोक्तम्– अहमज्ञ इत्यनुभवसिद्धमज्ञानं दुरपह्नवमिति। तत्र पृच्छ्यते पण्डितमानी। अहमज्ञ इति प्रत्यये, को वाऽहंपदार्थः। शुद्धं ज्ञानमात्रम्, अहंकारो वा, तदन्यो वेति वक्तव्यम्। नाद्यः। ज्ञानमज्ञं ब्रह्माज्ञम् आत्माऽज्ञ इत्युक्तं स्यात्। न द्वितीयः। अहंकारोऽज्ञ इति प्रत्ययः स्यात्। ब्रह्माज्ञा-

ने प्रमाणाभावाच्च । अहमर्थस्य शुद्धात्मस्वरूपत्वाङ्गीकारे च तस्य मुक्तप्राप्यत्वापत्त्याऽस्मदिष्टापत्तेस्तव सिद्धान्तभङ्गात् । न तृतीयः । उभयेतरस्याध्यासकार्यत्वेन तदानीमभावात् । यदुक्तं कल्पितस्याधिष्ठानास्पर्शित्वमिति । तदनुपपन्नम् । अज्ञानस्य कल्पकाभावेन कल्पितत्वासिद्धेः । तथाहि । को वा अज्ञानस्य कल्पकः स्वयमेव वा चिन्मात्रं वा उभयेतरो वा । नाद्यः । आत्माश्रयदोषात् कल्पनायाश्चेतनधर्मत्वेन जडे तदसम्भवात् । अन्यथा घटादेरपि कल्पनाश्रयत्वापत्तेः । न द्वितीयः । निर्विशेषस्य कल्पकत्वासम्भवात् । न तृतीयः । उभयेतरस्याध्यासोत्तरभावित्वात् वास्तवत्वानङ्गीकाराच्च । यत्पुनरुक्तं नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति । तत्तुच्छम् । अज्ञोक्तिवद् विद्वदुपेक्षितत्वात् । यतस्तयोः परस्परं विरुद्धस्वभावत्वेनैव स्वरूपसिद्धिर्नान्यथा । यज्ज्ञानमज्ञानाविरोधि तज्ज्ञानमेव नास्ति, यज्ज्ञानाविरोधि तदज्ञानमेव नास्तीति लोके शास्त्रे च प्रसिद्धेः । अज्ञानं ज्ञानाविरोधीति अनुन्मत्तः को ब्रवीतीति भावः । तस्मादहमज्ञ इति प्रतीत्याश्रयो भवतां मते न कोऽपि सिद्ध्यति । तदभावेऽध्यासाभाव इति सिद्धम् । ननु भवतां मते कस्तदाश्रय इति चेच्छृणु । परमात्मभिन्नोऽल्पशक्तिस्तदधीनः सनातनस्तदंशभूतोऽनादिकर्म्मात्मिकाऽविद्यावृतधर्मभूताज्ञानो जीवक्षेत्रज्ञादिशब्दाभिधेयस्तत्प्रत्ययाश्रय इति । ज्ञाऽज्ञौ द्वावजावीशानीशौ, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति आत्मा हि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः। अस्ति खल्वन्योऽपरो भूतात्मा योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिना यस्य संमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद् गुणौघैः सूय्यमानः कलुषीकृतश्चेत्यादिश्रुतिभ्यः ।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः * तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः * न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा कर्मात्मा त्वपरोयोऽसौ कर्मबन्धैः स युज्यते * स सप्तदशकेनाऽपि राशिना युज्यते पुनः * अविद्याकर्मसञ्ज्ञान्या तृतीयाशक्तिरिष्यते यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा * संसारतापानखिलान-ऽवाप्नोत्यतिसन्ततान् * तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसञ्ज्ञिता* सर्वभूतेषु भूपाल तारतम्येन वर्तते* ममैवांऽशो जीवलोके जीवभूतः सनातनः*क्षेत्रज्ञं चाऽपि मां विद्धीत्यादिस्मृतिभ्यश्च। अतो ब्रह्मण्यध्यासोऽयुक्त एवेति सिद्धम्। नन्वध्यासस्यासङ्गस्वप्रकाशात्मनि अयुक्तत्वमलङ्कार इति चेन्न। पुनस्तत्र युक्त्युपपादनस्य जलताडनादेरिव वैयर्थ्यात्। एवञ्चाध्यासाऽयुक्तत्वमलङ्कारत्वेनाऽङ्गीकुर्वतां निरपत्रपाणां शास्त्रसिद्धान्तयोर्बाधस्याप्यलङ्कारत्वेनाङ्गीकारे को दोषः!!। ननु तमःप्रकाशयोरिवाऽत्यन्तविरुद्धस्वभावयोश्चिज्जडयोस्तद्धर्माणां चेतरेतरैक्यानुपपत्तिरुक्ता इति? सत्यम्। तथापि अत्यन्तविविक्तयोरपीतरेतराविवेकेनान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्म्मांश्चाऽध्यस्य, मनुष्योऽहं, ममेदमिति लोकव्यवहारः अनादिकालप्रवृत्तः। अतोऽध्यासो वर्णनीय इति चेन्न। अविवेकाश्रयाभावात्। तथाहि। को वाऽविवेकाश्रयः—जडो विषयः, शुद्धात्मा वा, तदन्यो वा? नाद्यः। तस्याविवेक स्वरूपत्वात्। न द्वितीयः। अविवेकपर्यायाऽज्ञानाऽऽश्रयत्वस्य पूर्वमेव निरस्तत्वात्। न तृतीयः। उभयान्यस्याध्यासकार्यत्वेन अध्यासस्याद्याप्यऽसिद्धेः। किञ्च, अत्यन्तविविक्तयोरित्युक्त्वा पुनरितरेतराऽविवेकेनेतिस्वोक्तिविरोधाच्च। न हि सूर्यान्धकारयोर्दीपघटयोर्वाऽविवेकः कस्यापि जायते। सर्वानुभवविरुद्धत्वादिति भावः। किञ्चात्मनो भवतां मतेऽविषयत्वाङ्गीकारादप्यधिष्ठानत्वासिद्धिः।

नच, नाऽयमेकान्तेनाऽविषयोऽस्मत्प्रत्ययविषयत्वादपरोक्षत्वाच्चेति वाच्यम्। विकल्पासहत्वात्। को वा तद्विषयः–शुद्धात्माऽन्यस्तो वा। नाद्यः। अहमर्थस्वरूपत्वेन मुक्तस्वरूपत्वापत्त्या सिद्धान्तभङ्गादस्मदिष्टत्वाच्च। नन्वस्मदर्थः=चिदात्मा प्रतिबिंम्बितत्वेन अत्र प्रतीयते सोऽस्मत्प्रत्ययोऽहङ्कारस्तत्र भासमानत्वं तद्विषयत्वमित्यर्थ इतिचेन्न चिन्मात्रस्यास्मदर्थत्वे मिथ्यात्वापत्तेः। अध्यस्तत्वे तु अध्यासे सति भासमानत्वं, तस्मिन् सति स इत्यन्योन्याश्रयदोषः। नचानादित्वात् पूर्वाध्यासे भासमानात्मन उत्तराध्यासाधिष्ठानत्वेन सम्भवाद् नोक्तदोष इति वाच्यम्। अध्यासमात्रस्यानादित्वायोगात्। अध्यासो नानादिः, पूर्वप्रमाहितसंस्कारजन्यत्वात्। शुक्तिकारजतवदित्यनुमानात्। किञ्च। समसत्ताके उपाधौ प्रतिबिम्बदर्शनात्। न हि सतोऽसति तत्त्वम्। तथाचाऽहङ्कारस्य सत्यत्वेऽनिवृत्तिप्रसङ्गात्। कल्पितत्वे तत्र चेतनप्रतिबिम्बनानुपपत्तेः। अन्यथा मरीचिकाजलेऽपि सूर्यादिप्रतिबिम्बापत्तेः। अपि च भ्रमसामग्रीविरहादपि अध्यासाभावः। तथाहि, भ्रममात्रे सावयवत्वमिन्द्रियसंयुक्ततया ग्राह्यत्वं सादृश्यं पूर्वप्रमाजन्यं संस्कारो दोषश्चेत्यपेक्षितम्। तत्राद्यं त्रयमधिष्ठाने दोषसंस्कारौ ज्ञातृपुरुषनिष्ठौ। यथेदं रजमित्यत्रेन्द्रियसंयुक्ततया ग्राह्यत्वं, सावयवत्वं परमार्थरजतसादृश्यं शुक्तौ प्रत्यक्षप्रमाणसिद्धम्। तत्संस्कारदोषौ च पुरुषनिष्ठौ न तथादार्ष्टान्तिके निरवयवनिर्गुणपरोक्षात्मनि गुणावयवसादृश्यादीनामयोगात्। केवलो निर्गुणश्च, निष्कलं, निरवद्यमित्यादिश्रुतेः। नाऽपि दोषसंस्कारौ सम्भवतः। तदाश्रयस्य ज्ञात्रन्तरस्याऽभावात्। अधिष्ठानमात्रस्यैव तदा सत्त्वात्। जीवस्य भ्रमकार्यत्वेन तदुत्तरभावित्वात्। ननु नैतदुपपन्नम्। यतः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति नियमाभावात्।

अप्रत्यक्षे निरवयवेऽप्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति। नील-नभसोः सादृश्याभावेऽप्यध्यासदर्शनादिति भावः। एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। नाऽपि संस्काररूपकारणाभावः। प्रत्यगात्मनि हेतुहेतुमद्भावेनाध्यासप्रवाहस्यानादित्वात्।
तथाच पूर्वाध्यासस्योत्तराध्यासं प्रति संस्कारद्वारा कारणत्वात्। नच पूर्वप्रमाजन्य एव संस्कारो हेतुरिति वाच्यम्। लाघवेन पूर्वानुभवजन्यसंस्कारस्य हेतुत्वात्। अतः पूर्वाऽध्यासजन्यसंस्कारोऽस्तीत्यनेन कारणाभावान्नाध्यास इत्यपास्तमिति चेन्न। दृष्टान्ताभासात्। तथाहि। आकाशस्य पञ्चीकृतत्वेन सावयवत्वात्। पञ्चीकृतत्वादेव पृथिव्यादिभूतानां तत्र सत्त्वेन तदाश्रयभूतनीलादिरूपाणामपि तत्र सत्त्वादप्रत्यक्षत्वाभावात्। नीलादिप्रत्ययानां प्रमात्वादिति यावत्। नच दूरदेश एव तत्प्रत्ययो न तु सन्निहितदेशे, कथं प्रमात्वमिति वाच्यम्। तत्राऽपि तुल्यत्वात्। यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे इति न्यायात्। एतेन एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यास इति निरस्तम्। यत्पुनरुक्तं, हेतुहेतुमद्भावेनाध्यासप्रवाहस्यानादित्वात् पूर्वाध्यासस्योत्तराध्यासं प्रति संस्कारद्वारा कारणत्वादध्याससिद्धिरिति। तदपि युक्त्याभासम्। हेतोरेव वक्तुमशक्यत्वात्। तथाहि। हेतुत्वेनाङ्गीक्रियते यः प्रथमाऽध्यासः स सहेतुको, निर्हेतुको वा? नाद्यः। प्राथम्यासिद्धेस्तस्याऽप्यन्यस्तस्याप्यन्य इत्यनवस्थापत्तेश्च। प्रमाजन्यसंस्कारस्यैव पूर्वकारणत्वनियमात्। तदनङ्गीकारेऽध्यासस्य वक्तुमशक्यत्वात्। नच लाघवेन संस्कारमात्रस्यैव तत्रापेक्षितत्वान्न विषयसत्त्वमपीत्युक्तमेवेति वाच्यम्। असतः संस्कारस्यैवासम्भवात्। नच माऽस्तु संस्कारस्यापि कारणत्वं, प्रतीतिमात्रस्यैव सुवचत्वादिति वाच्यम्।

असतो विषयस्य प्रतीतेरेव सर्वाऽनुभवविरुद्धत्वात् । अन्यथा खपुष्पशशशृंगादेरपि प्रतीत्यापत्तेरसत्त्वाविशेषात् । ननु खपुष्पादेरसत्त्वात् प्रतीत्यभावः प्रतीतिविषयस्यानिर्वचनीयत्वाङ्गीकारान्नोक्तविरोध इतिचेन्न । सदसदुभयभिन्नपदार्थस्याभावाददृष्टश्रुतत्वाच्च । नच शुक्तिरजतस्यैवासत्त्वे प्रतीतिर्न स्यात्,सत्त्वे बाधो न स्यादतः प्रतीतिबाधाभ्यामनिर्वचनीयत्वं निश्चीयते । केनापि विदुषा तस्यान्यथा वक्तुमशक्यत्वादनीर्वचनीयत्वसिद्धिरिति वाच्यम् । सत्ख्यातिवादिनां वैदिकानां सर्वेषां ज्ञानानां सत्यत्वाभ्युपगमात् । कथं तर्हि तस्य बाधो, बाधे च कथं सत्त्वमिति चेत् । उच्यते । सतोऽपि प्रमाणबलेन निवृत्तिर्जायते, न त्वत्यन्ताभावः । पुण्येन पापस्य, सदौषधिभी रोगस्योत्तरज्ञानेन पूर्वज्ञानस्य च निवृत्तेर्दृष्टश्रुतत्वात् । पुण्येन पापमपनुदतीति श्रुतेः । एवमिदं रजतमित्यत्राऽपि रजतज्ञानस्य दोषसंस्कारसादृश्यात्मकसद्धेतुकत्वात् सत्त्वमेव । तस्य पुनः शुक्तिचक्षुःसन्निकर्षेण शुक्तिस्वरूपावरणनिवृत्त्या निवृत्तेः सम्भवात् । तस्मादज्ञानस्यैव सत्त्वाद्विषयस्य सत्त्वाऽनियमात् सत्ख्यातिवादसिद्धिः ॥

ननु विषयस्याऽसत्त्वेपि प्रतीत्यङ्गीकारश्चेत्तर्ह्यागता यूयमस्मन्मार्गे । अस्माभिस्तथाभ्युपगमादितिचेन्न । सद्धेतुका ख्यातिः सत्ख्यातिरित्यर्थाभ्युपगमात् । त्वया तु द्वैतापत्तिभयाद्दोषसंस्कारादिकारणस्य सत्त्वं वक्तुमशक्यत्वात् । अतो महद्वैलक्षण्यमिति भावः । एतेनैव प्रथमाध्यासो निर्हेतुक इत्यपि निरस्तः । कारणाभावे कार्याभावनियमात् । असतः कुत्रापि कारणत्वादर्शनाच्च । अन्यथाऽनिर्वृत्तिप्रसङ्गात् । नचासतोऽपि रज्जुसर्पस्य भयकम्पादिजनकत्वदर्शनात् कार्यकारणसत्तापेक्षितत्वनियमभङ्ग इति वाच्यम् । स्वरूपेणाऽसतः कार्योत्पत्त्यनुकूलशक्तिमत्त्वकारणलक्षणत्वाऽसं-

भवात्।सर्पभ्रमस्थलेऽपि सर्पविषयकज्ञानस्यैव भयादिहेतुत्वं,नारोपितसर्पस्य। अन्यथा सर्पविषयकज्ञानात्यन्ताभाववतो बालस्यापि भ्रमो भयकम्पादिश्च भवेन्न तु तदस्ति, प्रत्युत सत्यसर्पोऽपि बालैर्गृह्यते। तस्माद्ब्रह्मण्यध्यासस्य मानाभावात्कारणाभावात्प्रमाणाभावाच्च तद्वक्तृणां भ्रान्तिमत्त्वमिति सिद्धम् । एतेनैव–तमेतमविद्याख्यमाऽऽत्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीत्यपास्तम् ॥

ननु, कर्त्ता द्रष्टा श्रोता ऽनुमन्ताऽहमिति प्रत्यक्षस्य देवदत्तकर्तृको व्यवहारः, तदीयदेहादिष्वहंममाऽध्यासमूलकः। तदन्वयव्यतिरेकानुसारित्वात् । यदित्थं तत् तथा । यथा मृन्मूलो घट इत्यनुमानस्य, तत्र जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इत्यन्वयः, सुषुप्तावध्यासाभावे व्यवहाराभाव इति व्यतिरेकः। यदि प्रमाताऽध्यासवान् न स्यात् तर्हि प्रमाणादिव्यवहारो न स्यादित्यर्थापत्तेश्चात्र मानत्वात् । तथाचाह भाष्यकारः। "कथं पुनरविद्यावद्विषयाणिं प्रत्यक्षादिप्रमाणानि शास्त्राणि चेति। उच्यते—

देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यऽनुपपत्तेः । न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति । न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः सम्भवति । न चाऽनध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियते।न चैतस्मिन् सर्वस्मिन्नऽसति असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति। तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चे"ति कथं प्रमाणाभाव इति चेन्न। उक्तप्रत्यक्षानुमानादेराभासमात्रत्वात् । तथाहि । उक्तप्रत्यक्षानुमानादीनां देहेन्द्रियादियुक्तात्मपरत्वेन अध्यस्तविषयकत्वाभावात् । आत्मेन्द्रियमनो-

युक्तम्भोक्तेत्याहुर्मनीषिण इति श्रुतेः । कर्तुरेव भोक्तृत्वनियमात् । अन्यथा 'युक्त'स्थानेऽध्यस्तमिति श्रुतौ प्रयोगः स्यात् । नच तथात्वेऽसङ्गो हीति श्रुतिविरोधापत्तिरुक्तैवेति वाच्यम् । तस्याः श्रुतेः परमात्मपरत्वात् । जीवात्मनः प्रमातृत्वे, योऽयं वेद जिघ्राणाति स आत्मा कतम इत्युपक्रम्य पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुष इति श्रुतिरपि मानम् । परमात्मनस्त्विन्द्रियाद्यन्तरेणैव कर्तृत्वप्रमातृत्वाद्युपपत्तेर्न तत्राध्यासगन्धोऽपि । तथाच श्रुतिः– अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । यस्मादन्तीन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्त इत्यादिः । नाऽप्यनुमानसिद्धिः । अध्यासस्याद्याप्यऽसिद्ध्या साध्याभावेन व्याप्त्यऽग्रहात् । अत एव हेतोः स्वरूपाऽसिद्धत्वाद् अध्यासाऽसिद्ध्या तदन्वयव्यतिरेकस्य सुतरामसिद्धेः । घटादीनां मृत्परिणामरूपत्वेन दृष्टान्तवैषम्याच्च । तथैव व्यवहारस्य देहादियुक्तात्मकर्तृकत्वेनाऽन्यथासिद्धत्वादर्थापत्तेरपि निर्मूलत्वादाभासमात्रत्वसिद्धिः । नच सुषुप्तावध्यासाभावे व्यवहाराभावाद्व्यतिरेकसिद्धिस्तयैवान्वयसिद्धिरतो हेतोः स्वरूपासिद्ध्यभाव इति वाच्यम् । तत्र करणोपरमान्नोक्तानुपपत्त्युद्धारः। ननु प्रमाश्रयत्वं हि प्रमातृत्वम् । प्रमा यदि नित्यचिन्मात्रं तदाश्रयत्वायोगः, करणवैयर्थ्यञ्च। यदि वृत्तिमात्रं जगदान्ध्यप्रसङ्गः । वृत्तेर्जडत्वात् । अतो वृत्तीद्धो बोधः प्रमा । तदाश्रयत्वम् असङ्गस्यात्मनो वृत्तिमन्मनस्तादात्म्याध्यासं विना न सम्भवतीति भाव इति चेन्न । अनुपपन्नत्वात् । तथाहि । यदुक्तं वृत्तीद्धो बोधः प्रमेति। स बोधः किमात्मस्वरूपं? वृत्तिरेव वा ? आत्मधर्म्मो वेति ? विवेचनीयम् । नाद्यौ वक्तुं शक्यौ । तयोस्त्वयैव दूषितत्वात् । किञ्च, तस्य चिन्मात्रत्वे वृत्त्याराधनाऽयो-

गात् परिशेषादकामेनाऽपि आत्मधर्मभूतगुण एव वक्तव्यः। स चाऽस्मादिष्ट एव। तस्य तु त्वांत्तमन्मनोऽध्यासं विनैव प्रमात्वसम्भवात्। परन्तु, अज्ञानेनाऽऽवृतं ज्ञानमित्यादिपूर्वोक्तप्रमाणादनादिकर्मात्मकाज्ञानावृतत्वात् तस्य बद्धावस्थायां करणद्वारा बहिः प्रसरणात् तदाश्रयत्वादात्मनोऽपि करणाधीनप्रमातृत्वात् करणानां च सुषुप्तौ लयात्तदभानं न विरुध्यते। एतेन, तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेत्युक्तमपास्तमित्यलं विस्तरेण। तस्मात् द्रष्टृत्वकर्तृत्वादयः प्रत्यया यथार्था एव, नाध्यासविषया इति सिद्धम्। ननु तथापि न ते यथार्थाः। अपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गावधृततात्पर्येण च तत्त्वमस्यादिवाक्येन अकर्तृब्रह्मबोधनेन तेषां भ्रमत्वनिश्चयादिति चेन्न। वाक्यार्थज्ञानाभावात्। तथाहि। अपौरुषेयतया निर्दोषेण लिङ्गावधृततात्पर्येण च तत्त्वमस्यादिवाक्येन प्रतिपाद्यमानस्य, सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयमिति सच्छब्दवाच्यस्याऽतिशयसाम्यशून्यस्य, तदैक्षत बहु स्यां प्रजायेय, तत् तेजोऽसृजतेति ईक्षणबहुभवनसङ्कल्पवतस्तेजःप्रभृतिजगत्स्रष्टुरैतदात्म्यमिदं सर्वं, तत् सत्यं, स आत्मा, तत्त्वमसि श्वेतकेतो इति तादात्म्योपदेशोऽस्मदिष्टतमः; परन्तु तस्मिन् वाक्ये अकर्तृब्रह्मोपदेशस्य केनाऽपि पदेनोपदिष्टत्वाभावात्। प्रत्युतेक्षणबहुभवनसङ्कल्पकर्तृत्वपूर्वकतेजःप्रभृतिजगत्कर्तृत्वश्रवणाच्चोक्तप्रत्ययानां भ्रमत्वासिद्धेः।

किञ्च, लिङ्गोपेततत्त्वमस्यादिवाक्येन भवदभिमतनिर्विशेषाकर्तृब्रह्मबोधनस्यैवासम्भवः। वाच्यत्वानभ्युपगमात्। वाक्यमात्रस्य किञ्चिद्धर्मावच्छिन्नवस्तुबोधकत्वनियमात्। एतेन एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्त्तकः सर्वलोकप्रत्यक्ष इति निरस्तम्। युक्तिभानकारणप्रमाणाभावात्। मे माता

वन्ध्येति वाक्याभासवदप्रामाण्यादिति यावत् । यत्पुनरुक्तम्— अस्याऽनर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति । तदत्यन्तानुपपन्नम् । तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि न सम्बध्यते इति स्वोक्तिविरोधात् । किञ्चाध्यासस्यानर्थहेतुत्वमस्ति नवेति निश्चेतव्यम् । नाद्यः । दोषादिसंबन्धापत्त्याऽसङ्गत्वश्रुतिविरोधात् । न द्वितीयः । अनर्थहेतुत्वाभावात्तन्निवृत्त्यर्थं शास्त्रारम्भस्य वैयर्थ्यात् । शास्त्रारम्भो व्यर्थः । प्रयोजनाभावात् । दिवा दीपवदित्यनुमानात् । किञ्च, कर्तृत्वाद्यनर्थहेतोरध्यासस्यात्मैकत्वविद्याप्रतिपत्त्या प्रहाणं भवति । सा च वेदान्तविचारेणेतिं सिद्धान्तं प्रतिपद्यमानाः विद्वद्भिः प्रष्टव्याः । किमात्मैकत्वविद्याप्रतिपत्त्या उक्ताध्यासमात्रस्यैव प्रहाणिर्न तु तत्कारणाविद्यायाः ? उत समूलस्यात्यन्तिकनाश इति विवेचनीयमिति । नाद्यः । मूलकारणस्य सत्त्वेन पुनस्तदुत्पत्त्यापातात् । अविद्यानिवर्त्तकाभावे विद्यास्वरूपहानेश्च । अविद्यानिवर्त्तकाऽन्तराभावेनाऽनिवृत्तिप्रसङ्गाच्च । न द्वितीयः । शुक्तिज्ञानाद्रजतबाधवद् आत्मैकत्वविज्ञानादध्यस्तसर्वप्रपञ्चस्य बाधाऽदर्शनात् । आत्मैकत्वविज्ञानेन सर्वबाधस्वीकारे च अद्वैतसिद्धान्तसम्प्रदायोच्छेदप्रसङ्गः स्यात् । तथाहि । अद्वैतसिद्धान्तप्रवर्त्तकाचार्याः अज्ञाः ? आत्मैकत्वविद्यावन्तो वा ?। नाद्यः । अज्ञत्वादेवाऽऽचार्यत्वभङ्गात् । अज्ञोपदिष्टस्य अप्रामाण्याच्च । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति भगवदुक्तेः । अन्यथाऽन्धपरम्परान्यायापत्तेः । अन्धैर्नीयमाना यथान्धा इति श्रुतेः । न द्वितीयः । अद्वैततत्त्वसाक्षात्कारवतां द्वैतदर्शनाभावेन स्वमतपरमतोद्देशपूर्वकदूषणभूषणोपपादनात्मकशास्त्र-

प्रणयनरूपभेदज्ञानाऽसम्भवात् । गुरुशिष्योपदेशरूपभेददर्शनाऽसम्भवाच्च को वा गुरुः कस्मै शिष्याय किं वा तत्त्वमुपदिशेत् । तस्य सर्वस्य बाधितत्वात् । अन्यथा भेददर्शनस्यैव भवन्मतेऽज्ञानमूलकत्वात् । कार्यदर्शनस्य कारणसत्तापूर्वकत्वनियमेन विद्यावत्त्वस्याऽवश्यम्भावात् । तद्योगादनाप्तत्वप्रसङ्गस्य दुर्वारत्वात् । ननु जीवन्मुक्तत्वात्तेषां दग्धपटन्यायेनानुवर्त्तमानबाधितभेददर्शनान्नोक्तदोषयोग इति चेन्न । दृष्टान्तवैषम्यात् । दग्धपटस्य किमपि कार्यकारित्वाभावात् । तेषां तु पूर्ववदेव सर्वक्रियाकारित्वं प्रत्यक्षप्रमाणसिद्धमेवेति भावः । न चाऽन्यदृष्ट्यैव तेषां क्रियाकारित्वमिति वाच्यम् । नियामकाऽभावाच्छास्त्रप्रमाणशून्यत्वाच्च । नच प्रारब्धमात्रशेषत्वात् तत्कृतकार्यकारित्वं न दोषावहमिति वाच्यम् । सुखदुःखादिभोगात्मकप्रारब्धकर्मणि तत्कार्यभूतकामक्रोधादौ च विद्यमाने मुक्ताभिधानस्य, मुक्ता वयमित्यज्ञजनतावञ्चकतामात्रत्वात् । एवञ्च सञ्ज्ञामात्रजीवन्मुक्तेर्जन्मान्धस्य पुंसः कमलनयनसंज्ञावदुपहासमात्रत्वात् । जीवन्मुक्तौ प्रमाणाभावाच्च ॥

ननु तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति श्रुतिसिद्धा जीवन्मुक्तिः किमिति निन्द्यते इति चेत् सत्यम् । गतत्रपाणां किमप्यशोभनं नास्तीति भावात् । श्रुतौ, तावदेव चिरं न विमोक्ष्ये अथ सम्पत्स्ये इति पदैः प्रारब्धभोगप्रतिबन्धकं वर्त्तमानकाले मोक्षाभावं भाविमोक्षञ्च साक्षादुच्यमानं ज्ञात्वाऽज्ञात्वा वा येथछ्वादित्वादत एव यथाकामचारिणां सिद्धान्ते किमपि दूषणं नाऽस्तीतिभावः । एवञ्च वेदान्तशास्त्रस्याप्रयोजकत्वेन वैयर्थ्यात् केवलाद्वैतवादिमतमसङ्गतमेवेति सिद्धम् । अध्यासाज्ञानलक्षणतन्निवर्त्तकादिविशेषनिरासस्तु परमतगिरिवज्राख्ये ग्रन्थे विस्तृतस्तत्रैव द्रष्टव्य इत्यलं विस्तरेण ॥

ननु द्वैतस्याध्यस्तत्वानङ्गीकारे परमार्थतो भिन्नानां पदार्थानां ब्रह्मैक्यासम्भवात् स्वमुखेन भवद्भिरपि निरस्तत्वाच्च । पूर्वोक्तश्रुतीनां ब्रह्मैकत्वप्रतिपादिकानां भेदप्रतिषेधिकानां च विरोधात्सिद्धान्ताभावप्रसङ्गः स्यादितिचेन्न । सच्छास्त्रसिद्धान्तरक्षणार्थं भगवत्परब्रह्मपुरुषोत्तमाज्ञयावनितलावतीर्णानां श्रीसनत्कुमारसम्प्रदायप्रवर्त्तकाऽऽचार्य्याणां सिद्धान्ते श्रुतिविरोधगन्धस्याऽप्यऽभावात् । तथाहि । न तावत्सदेवेति श्रुतिविरोधः । अग्रे सृष्टेरादौ इदंशब्दवाच्यस्य कार्यस्य जगतः सच्छब्दवाच्ये कारणे अतिसूक्ष्मरूपत्वेन सत्त्वेऽपि नामरूपविभागाभावेन पृथग्ग्रहणानर्हत्वात् सदेवेति कारणेनैक्यनिर्देशः सूपपन्नः । अन्यथा सच्छब्दवाच्यस्य कारणस्य ब्रह्मण इदमित्यङ्गुल्यानिर्देशायोगात् कार्यस्य कारणे सूक्ष्मरूपेण सत्त्वानङ्गीकारे च असत्कार्यवादाभ्युपगमापत्त्या तत् सदासीत्, सत्त्वाच्चाऽवरस्य, असद्व्यपदेशादितिचेन्न धर्म्मान्तरेण वाक्यशेषात्, युक्तेः शब्दान्तराच्च, पटवच्च इत्यादिशास्त्रावगतसूत्रकारमतबहिर्भूतत्वप्रसङ्गः स्यात् । किञ्च इदमा निर्दिष्टस्य कार्यस्य पूर्वमभावाङ्गीकारे आसीदीति पूर्वकालसम्बन्धो न स्यात् । श्रुत्यर्थश्च तत्र सच्छब्दः स्वतन्त्रवाचकः । सत्त्वं स्वातन्त्र्यमुद्दिष्टमिति वाक्यात् । एकशब्दश्च कारणैकत्वं विदधाति । एवकारश्चान्ययोगव्यवच्छेदार्थकस्तत्समं निषेधति । अद्वितीयशब्दश्च तदाधिक्यं निषेधतीति, न तत्समश्चाभ्यधिकश्च दृश्यते इति श्रुत्येकार्थत्वात् ॥ अन्यथा एकपदेनैव अद्वैतसिद्धौ अन्यपदयोर्वैयर्थ्यापत्तेः । अथ, तत्त्वमसि, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्मेत्यादिश्रुतीनां चिदचिदात्मनोर्ब्रह्मात्मकत्वेन, तदायत्तस्थितिप्रवृत्तिकत्वेन तद्व्याप्यत्वेन च ब्रह्मतादात्म्यप्रतिपादनेन स्वार्थे एव प्रामाण्यात् सर्वं समञ्जसम् । तत्र ब्रह्मात्मकत्वं नाम– ब्रह्म आत्मा यस्य

चेतनाचेतनरूपवस्तुजातस्य तद् ब्रह्मात्मकं, तस्य भावस्तत्त्वम् । तेन,एष मे आत्मान्तर्यामी एष ते आत्मान्तर्यामी एष सर्वभूतान्तरात्मा सर्वव्यापी सर्वभूतान्तरात्मा,पतिं विश्वस्यात्मेश्वरम्आत्मेतितूपगच्छन्ति ग्राहयन्ति च,अहमात्मा गुडाकेश सर्वभूताशयस्थितः,सर्वस्य चाहं हृदि सन्निविष्टः, यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः,अहं भवो भवन्तश्च सर्वे नारायणात्मकाः, क्षेत्रज्ञं चापि मां विद्धि,इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं, धृतिः वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव चेत्यादिश्रुतिस्मृतिसूत्रेभ्यः । यो यदात्मकः स तदभेदव्यपदेशार्हः सुवर्णकुण्डलादिवदितिव्याप्तेश्चालिङ्गसिद्धत्वात् । तदायत्तस्थितिप्रवृत्तिकत्वेन, तत्तस्य ब्रह्मण आयत्ता अधीना स्थितिः प्रवृत्तिश्च यस्य वस्तुमात्रस्य तत्तथा, तस्य भावस्तत्त्वम् । तेन सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा, एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषास्माद्वातः पवते भीषोदेति सूर्य्यः, भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः, किमनेन जगन्नाथ सर्वं त्वद्वशगं जगत्, विश्वं चेदं यद्वशे विश्वयोने, नमोऽस्तु ते शार्ङ्गचक्रासिपाणे, ईश्वरः सर्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति * भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया, ससुरासुरगन्धर्वं सयक्षोरगराक्षसं, जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरमित्यादिश्रुतिस्मृतिभ्यः । तथाच यद्यदायत्तस्थितिप्रवृत्तिकं वस्तु तत्तदभेदव्यपदेशार्हामिति व्याप्तिराम्नायते छन्दोगैः प्राणसंवादे, न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवतीत्यादिना । किञ्च तद्व्याप्यत्वेन तत्तस्य ब्रह्मणो व्याप्यं यत्तद्व्याप्यं तस्य भावस्तत्त्वम् । तेन,यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा,अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः, द्यावापृथिव्योरिदमन्तरं हि व्या-

प्तं त्वयैकेन दिशश्च सर्वा इत्यादिशास्त्रात् । यो यद्व्याप्यः स तद्रूप इत्यत्र, योऽयं तवागतो देव समीपं देवतागणः, स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान्, सर्वं समाप्नोषि ततोऽसि सर्वः, सर्वगत्वादनन्तस्य स एवाहमवस्थित इत्याद्याः स्मृतयः प्रमाणत्वेन बोध्याः ॥

एतदुक्तं भवति। सत्ता तावद् द्विविधा-स्वतन्त्रपरतन्त्रभेदात्। तत्र स्वतन्त्रसत्ता नाम आत्माश्रितत्वे सति स्वायत्तस्थितिप्रवृत्तिकता । सा परब्रह्मविश्वात्मनिष्ठा। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषास्माद् वातः पवते,आत्मा, हि परमस्वतन्त्रोऽधिगुणः,एष सर्वेश्वरः सर्वाधिपतिः, स कारणं करणाधिपाधिपः न तस्य कश्चिज्जनिता न चाधिप इत्यादिश्रुतिभ्यः । सर्वस्य चाऽहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च, शास्ता विष्णुरशेषस्येत्यादिस्मृतिभ्यश्च ।एवं स्वतन्त्रसत्ताश्रयो निरस्तसाम्यातिशयो विश्वात्मा परब्रह्म भगवान् श्रीपुरुषोत्तम इति सिद्धम्।परतन्त्रसत्त्वं च परायत्तस्थितिप्रवृत्तिकत्वम्।तच्च चेतनाचेतनात्मकनियम्यवर्गवृत्ति । यदासीत्तदधीनमासीत्, जीवोऽल्पशक्तिरस्वतन्त्रोऽवर इत्यादिश्रुतिभ्यः । मत्तः सर्वं प्रवर्त्तते, सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे नचाऽपरे, अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारतेत्यादिस्मृतिभ्यः। परतन्त्रसत्त्वं द्विविधं, कूटस्थत्वं विकारशीलं चेति। तत्र कौटस्थ्यं नाम जन्मादिविकारशून्यत्वे सति नित्यत्वम्।तच्च जीवात्मवर्गाश्रितम्। तदाश्रयो जीवः प्रत्यगक्षरपुरुषक्षेत्रज्ञादिशब्दाभिधेयः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, न जायते म्रियते वा विपश्चित्, अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीर इत्यादिवाक्येभ्यः । द्वितीयं च विक्रियायुक्तत्वे सत्यनाद्यन-

न्ततत्त्वम् । तत्तु प्रकृतिवर्गाश्रितम् । तदाश्रयं च कार्यकारणात्मकं प्रधानप्रकृत्यादिशब्दवाच्यम् । गौरनाद्यन्तवती जनित्री भूतभाविनी सितासिता च रक्ता च सर्वकामदुघा विभोरित्यादिश्रुतेः । त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्, अचेतना परार्था च नित्या सततविक्रिया, तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्, आविर्भावतिरोभावजन्मनाशविकल्पवदित्यादिवैष्णववचनाच्च । तथाच स्वतन्त्रसत्त्वविषयकाभेदवाक्यप्रवृत्तिस्तस्यैक्यात् । तेनैव तेषां नैराकाङ्क्ष्यम् । तथैव भेदनिषेधपराणां चाऽपि चेतनाचेतनवस्तुवृत्तिस्वतन्त्रसत्त्वनिषेधपरत्वेन स्वार्थे एव प्रामाण्यात् । भेदवाक्यानां तु परतन्त्रसत्त्वविषयकत्वेनैव स्वार्थविधायकत्वात्सर्वं समञ्जसम् । एवञ्च स्वतन्त्रसत्त्वं परतन्त्रसत्त्वाभावं चाश्रित्य तत्त्वमस्यादिवाक्यानि भेदाभेदवाक्यानां परस्परविरुद्धानामविरोधेनान्वेतुकामानि जगद्भिन्नाभिन्नं ब्रह्म प्रतिपादयन्ति । तथाच विश्वात्मा पुरुषोत्तमः स्वाश्रितात्मसत्तया विश्वस्मादभिन्नः । तथैवात्मीयचेतनाऽचेतनानियम्यवर्गवृत्तिपरतन्त्रसत्त्वाभावरूपेण विश्वविलक्षणत्वाऽपरपर्यायेण सार्वज्ञादिवद्भावरूपेणात्मासाधारणेन धर्मेणाऽस्थूलादिवाक्यप्रतिपाद्येन विश्वस्माद्भिन्न इति स्वभावतो विश्वभिन्नाभिन्नः श्रीपुरुषोत्तमः परब्रह्मभूतो भगवान् रमाकान्तः सर्ववेदान्तार्थ इति सिद्धान्तः । उभयविध-वाक्यानि तु पूर्वमेवोदाहृतानि उक्तार्थघटकवाक्यानि कानिचिदुदाह्रियन्ते । एकः सन् बहुधा विचचार, एको देवो बहुधा संनिविष्टः, त्वमेकोऽसि बहुधा बहून् प्रविष्ट इत्याद्याः श्रुतयः । एकत्वे सति नानात्वं नानात्वे सति चैकता, अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हतीति भगवान्मनुः । ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते, एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमिति भगवद्वाक्यम् । ॐ नमो वासुदेवाय तस्मै भगवते सदा, व्यतिरिक्तं न

यस्यास्ति व्यतिरिक्तोऽखिलस्य यः, नित्यानित्यप्रपञ्चात्मन् निष्प्रपञ्चाऽमलाश्रित, एकानेक नमस्तुभ्यं वासुदेवादिकारण, यः स्थूलसूक्ष्मः प्रकटप्रकाशो यः सर्वभूतो न च सर्वभूतः, विश्वं यतश्चैतदविश्वहेतो नमोऽस्तु तस्मै पुरुषोत्तमाय इति विष्णुपुराणे प्रह्लादवाक्यानि । तत्रैव ध्रुवस्तुतौ– पृथग्भूतैकभूताय भूतभूतात्मने नम इति । हरिवंशे घण्टाकर्णः श्रीकृष्णं प्रति, केचिद्बहुत्वेन वदन्ति देवमेकात्मना केचिदिमं पुरातनम्, वेदान्तसंस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यता स्मः, अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनिविष्टचित्ताः, आहुर्यमात्मानजं पुराणं द्रष्टुं तमीशं वयमुद्यताः स्म इत्याद्याः स्मृतयश्च चिदचिद्भिन्नाभिन्नब्रह्माभिधायिका अनुसन्धेयाः । अलं विस्तरेण ॥

नाऽपि नानात्वनिषेधकवाक्यविरोधः । तस्य कारणे नानात्वनिषेधपरत्वात् । इह जगत्कारणे ब्रह्मणि नानात्वं नास्ति । कारणस्य सर्वशास्त्रे एकत्वप्रतिपादनात् । नानात्वदर्शनं तु तिष्ठतु, नानेव दर्शनस्यैतावत् फलं, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति मृत्योरनन्तरं मृत्युमाप्नोति । पुनः पुनर्जन्ममरणादिरूपसंसारभाग् भवतीत्यर्थः । अतो न हि जगत्स्वरूपप्रतिषेधकमिदं वाक्यम् । विकल्पासहत्वात् । तथाहि । किमिदं वाक्यं ब्रह्मेतरं वस्तु प्राप्तं प्रतिषेधति, अप्राप्तं वा । आद्ये सत्यम्, असत्यं वा । नाद्यः । सत्यस्य निषेधायोगात् । अन्यथा ब्रह्मणोऽपि निषेधापत्तेः । न द्वितीयः । असत्यस्य प्राप्तेरेवासम्भवात् । न चाऽध्यस्तं मिथ्याभूतं प्रतिषेधतीति वाच्यम् । वेदस्य पूर्वं भ्रान्त्यभावात् ।

यथा लोके दोषवतः पुरुषस्य भ्रान्त्या शुक्तौ प्रतीतं रजतं पुनः शुक्तिस्वरूपसाक्षात्कारान्नेदं रजतमिति स एव प्रतिषेधति । तथा वेदस्य भ्रान्तिकारणाभावात् प्रतीत्यभावस्तदभावात् प्रतिषेधा-

ऽसम्भवात् । अन्यथा वेदे दोषाङ्गीकारे बाह्यमतप्रवेशापत्तेः । न द्वितीयः । अप्राप्तस्य निषेधायोगात् । तस्मादुक्तार्थस्यैव वरीयस्त्वम् । किञ्च, नानात्वदर्शनोक्तो दोषस्तु अज्ञानकारणवादिमत एव समन्वितः । यतस्तैः शुद्धस्य सर्वधर्मशून्यस्य द्वैतापत्तिभयात् कारणत्वमनभ्युपगम्य ब्रह्मणः कारणत्वप्रतिपादकशास्त्रबाधानिवृत्त्यर्थं तत्र मायावच्छिन्नस्य सर्वज्ञत्वसर्वशक्त्याश्रयस्येश्वराख्यस्य कल्पनात् । वैदिकसम्प्रदायनिष्ठानां तु एकस्यैव परब्रह्मणः शुद्धत्वाऽनन्तगुणशक्त्याद्याऽऽश्रयत्वेश्वरत्वकारणत्वाद्यङ्गीकारान्नोक्तदोषगन्धस्पृष्टत्वातस्पर्शावकाशः । तथैव, यत्र हि द्वैतमिव भवतीति श्रुतेरपि स्वतन्त्रद्वैतनिषेधपरत्वेन नैराकाङ्क्ष्याद् न कोऽपि विरोधः । तत्सिद्धं केवलाद्वैतवादिमते शास्त्रानर्थक्यमिति । तथैव केवलभेदवादिनां वेदैकदेशबाधस्योक्तत्वात् । न हि शास्त्रबाधनाऽर्थमाचार्याऽऽविर्भावो भवति । अपि तु तत्प्रवर्तनार्थमिति भावः । यदि भेदवादिभिरभेदवादिभिश्च स्वाभाविकोऽभेदो भेदोऽप्यङ्गीक्रियते चेत्तर्हि सर्वोऽपि वेदः सार्थकः स्यात् । परन्तु ते स्वसिद्धान्तं त्यक्त्वा आगता अस्मन्मार्गे । अन्यथोक्तदोषाणामवर्जनीयत्वादलं विस्तरेण ॥

चिदचिद्विशिष्टाद्वैतवादिमते तु नोक्तशास्त्रविरोधः । यद्यपि चेतनाऽचेतनयोर्ब्रह्मविशेषणत्वेनाङ्गीकृतयोरितरव्यावर्तकत्वविशेषणलक्षणत्वानुपपत्त्या ब्रह्मणस्तद्विशिष्टत्वासम्भवस्तथापि तयोर्ब्रह्मणा स्वाभाविकभेदाभेदस्यैवाऽङ्गीकारात् । ननु यः पृथिव्यन्तरोयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयती त्यारभ्य, य आत्मनि तिष्ठन् यश्चात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यऽमृत इत्यादिश्रुतिभिश्चिदचितोः परमात्मशरीरत्वाभिधानात् । शा-

रीरस्य च आत्मविशेषणत्वेन प्रसिद्धत्वात् । एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुषः कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इति कथं विशिष्टत्वासम्भव इति चेत्सत्यम् । श्रुतिभिश्चिदचितोः परमात्मशरीरत्वं प्रतिपाद्यते इत्यत्र न कश्चिद्विवादः, परं तु तयोर्विशेषणत्वस्य वक्तुमशक्यत्वात् । तथाहि । यत्र यत्र शरीरत्वं तत्र तत्र विशेषणत्वमिति नास्ति नियमः । प्रकृते तदभावात् । न हि व्यावर्त्तकत्वमन्तरेण विशेषणत्वङ्कस्याऽपि दृष्टं श्रुतं वा । तस्माद्व्यावर्त्यसत्त्वे एव शरीरस्य विशेषणत्वम् । अन्यत्र व्यावर्त्यानां सत्त्वेन शरीरस्य विशेषणत्वासम्भवात् प्रकृते चिदचितोर्विशेषणत्वे चिदचिद् ब्रह्मेति तत्त्वत्रयादन्यस्याभावाद्, भवद्भिरप्यनङ्गीकाराच्च । तस्माद् व्यावर्त्याऽभावाद् व्यावर्त्तकत्वविशेषणलक्षणत्वाभावस्तदभावे च ब्रह्मणो विशिष्टत्वाभावः सुतरां सिद्धः । माऽस्तु विशेषणत्वम् । एतावन्मात्रन्यूनत्वे न कापि क्षतिः । तयोर्ब्रह्मणा स्वाभाविकभेदाभेदाङ्गीकारेण सर्वेषां वाक्यानां स्वार्थे प्रामाण्यात् । तथाच तेषां ब्रह्मसूत्रभाष्ये । अत्रेदं तत्त्वम् । अचिद्वस्तुनश्चिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः । अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । अमृताक्षरं हर इति भोक्ता निर्दिश्यते । प्रधानमात्मनो भोग्यत्वेन हरतीति हरः । स कारणं कारणाधिपाधिपः न तस्य कश्चिज्जनिता न चाऽधिपः । प्रधानक्षेत्रज्ञपतिर्गुणेशः पतिं विश्वस्यात्मेश्वरं, शाश्वतं शिवमच्युतं, ज्ञाऽज्ञौ द्वावजावीशानीशौ, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । भोक्ता भोग्यं प्रेरितारं च मत्वा तयो-

रन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति । पृथगात्मानं प्रेरितारं च मत्वा, जुष्टस्ततस्तेनाऽमृतत्वमेति, अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजां जनयन्तीं सरूपाम्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इत्यादीनि बहुशः श्रुतिस्मृतिवाक्यानि पठित्वा, अग्रे, एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कारणावस्थं कार्यावस्थं जगत् स एवेत्याहुः । सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयं, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजतेत्यारभ्य, सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, ऐतदात्म्यमिदं सर्वं तत्सत्यं, स आत्मा तत्त्वमसि श्वेतकेतो इति । तथा सोऽकामयत बहु स्यां प्रजायेयेति, स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजतेत्यारभ्य, सत्यं चानृतं च सत्यमभवदित्याद्या इत्युक्त्वा कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात् कार्यस्यानन्यत्वेन कार्यस्य विज्ञाततया एकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरम् । हंताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तिस्रो देवता इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् । अतः स्थूलसूक्ष्मचिदचिद्वस्तुप्रकारं ब्रह्मैव कारणं, कारणञ्चेति ब्रह्मोपादानं जगदिति प्रतिपादितम् । नचैवमद्वैतमागतमिति वाच्यम् । तस्य तत्रैव दूषितत्वात् । तद्यथा निर्विशेषवस्त्वैक्यवादिनः सर्वे ब्रह्मात्मभावोपदेशाः परित्यक्ताः स्युः । एकस्मिन् वस्तुनि कस्य ता-

दात्म्यमुपदिश्यते। तस्यैवेति चेत् स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेयमस्ति किञ्चित् । कल्पितभेदनिरसनमिति चेत् । तच्च न सामानाधिकरण्यं तादात्म्योपदेशावसेयम्। सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेद् इत्यादिना ॥ भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्ता जीवावगता दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणात्मकब्रह्माऽऽत्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युरित्यादिना चौपाधिकभेदाभेदस्यापि निरस्तत्वात् । वेदार्थसङ्ग्रहेऽपि एकविज्ञानेन सर्वविज्ञानं, सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति, सत्यमिथ्यात्वयोरेकताप्रसक्तिर्वा इत्यादिना वेदान्तदीपे च ।

अत्रेयं वेदविदां प्रक्रिया । अचिद्वस्तुनः स्वरूपतः स्वभावतश्चात्यन्तविलक्षणस्तदात्मभूतश्चेतनः प्रत्यगात्मा । तस्माद्बद्धान्मुक्तान्नित्याच्च निखिलहेयप्रत्यनीकतया कल्याणैकतानतया सर्वावस्थचिदचिद्व्यापकतया नियन्तृतया शेषितया चात्यन्तविलक्षणः परमात्मा । तदुक्तं भगवता— द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति। श्रुतिश्च, प्रधानक्षेत्रज्ञपतिर्गुणेशः पतिं विश्वस्यात्मेश्वरम्, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इत्यादिका। सूत्रकारश्चैवं वदति, नेतरोनुपपत्तेः, भेदव्यपदेशाच्च, अनुपपत्तेस्तु न शारीरः, कर्तृकर्म्मव्यपदेशाच्च, पत्यादिशब्देभ्यः, अधिकं तु भेदनिर्देशात्, अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादित्यादिभिः । न चाविद्याकृतमुपाधिकृतं वा भेदमाश्रित्यैते निर्देशाः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति

च । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति,मुक्तोपसृप्यव्यपदेशाच्च, उत्तराच्चेदाविर्भूतस्वरूपस्तु, संपद्याविर्भावः स्वेन शब्दात्, जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च, भोगमात्रसाम्यलिंगाच्चेति सर्वाविद्योपाधिविनिर्मुक्तस्यैव भेदोपपादनात् । श्रुतिस्मृतिसूत्रेषु सर्वत्र भेदनिर्देशे चिदचिदीश्वरभेदः स्वाभाविको विवक्षित इति निश्चीयते इति प्रतिपादितं गीताभाष्येऽपि, न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपा इत्यस्य श्लोकस्य भाष्ये । औपाधिकभेदात्मवादे ह्यात्मभेदस्यातात्त्विकत्वेन तत्त्वोपदेशसमये भेदनिर्देशो न संगच्छते । भगवदुक्तात्मभेदः स्वाभाविक इति श्रुतिरप्याह । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनामितीत्यादिनाऽद्वैतस्य निरस्तत्वात् ।

नन्वेवं चेत्तर्हि कथं विशिष्टाद्वैतमिति सिद्धान्तसिद्धिरद्वैतस्य निरस्तत्वादितिचेन्न सूक्ष्मचिदचिद्विशिष्टस्थूलचिदचिद्विशिष्टयोर्ब्रह्मणोरेवाऽद्वैताभ्युपगमान्न तु विशेषणविशेष्ययोरपीति भावः । नच तर्हि केवलभेद आगत इति वाच्यम् । तस्याऽपि सूत्रभाष्ये एव निरस्तत्वात् । तथाहि । केवलभेदवादिनां चात्यन्तभिन्नयोरेकेनापि प्रकारेणैक्यासम्भवादेव ब्रह्मात्मभावोपदेशो न सम्भवतीति सर्ववेदान्तपरित्यागः स्यादित्यनेन परिशेषात् स्वाभाविकभेदाभेद एव तयोः सम्बन्धः सिद्धः । तथा चोक्तं स्वयमेव । विशेषणस्य विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः । विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्य इति । तथैव लघुवेदार्थसंग्रहेऽपि अणुगीतासु ऽद्वाविमौ पक्षिणौ नित्यं संज्ञेयौ चाप्यचेतनौ । एताभ्यां तु परो योऽन्यश्चेतनावान् स उच्यते इति सत्त्वपुरुषवैलक्षण्यं परमात्मनः प्रतिपाद्य, अनुमानाद्विजानीयात् पुरुषं सत्त्वसंश्रयमिति पुरुषस्य सत्त्वाश्रयत्वमुक्त्वा, सत्त्वं च पुरुषश्चैकस्तत्र सत्त्वविचारणेत्याश्र-

याश्रयिणोः सत्त्वपुरुषयोरैक्यं वा भेदो वेति विचारणीयमित्युक्त्वा, क्षेत्रक्षेत्रज्ञयोरैक्यमित्येतन्नोपपद्यते,पृथग्भूतंततः सत्त्वमित्येतदविचारितमिति सत्त्वक्षेत्रज्ञयोः केवलैक्यवादवत्केवलभेदवादोऽप्यविचारणीयइतिव्युत्पाद्य, तथैवैकत्वनानात्वमित्येव विदुषां नयः। मशकस्योदुम्बरे चैक्यं पृथक्त्वमपि दृश्यते।मत्स्यो यथाऽन्यः स्यादप्सु संयोगस्तु तथा तयोरित्युदुम्बरफलजलाश्रययोर्मशकमत्स्ययोरिव यथा स्वाश्रयापेक्षया भेदाभेदव्यपदेशावुभावपि न्याय्यौ तथा सत्त्वपुरुषयोरपीत्युपसंहृतम्। अनेन मोक्षशास्त्रे चिदचिदीश्वराणां भेदव्यपदेशस्तेषां स्वरूपवैलक्षण्यान्मुख्यः । अभेदव्यपदेशोऽप्याश्रयाश्रयिभावेन मुख्य एवेत्युक्तं भवति । तथाच विष्णुपुराणे, विष्णुः शास्त्रेषु युष्मासु मयि चासौ यथा स्थितः । सर्वगत्वादनन्तस्य स एवा ऽहमवस्थितः चिन्तयन् सर्वभूतस्थमात्मन्यपि च केशवम् । मय्यन्यत्र तथा शेषभूतेषु भुवनेषु च, तथैव व्याप्तिरैश्वर्यगुणसंसूचिकी प्रभोरिति भगवतः सर्वत्रावस्थितिरेव सर्वाभेदव्यदेशहेतुरित्युक्तम् । अतो न भेदाभेदव्यपदेशयोर्विरोध इति प्रतिपादितम् । एवञ्च केवलभेदकेवलाभेदयोः शास्त्रविरुद्धत्वेन निरस्तत्वाच्चिदचितोर्ब्रह्मणा सह स्वाभाविकभेदाभेदस्यैवाङ्गीकारो निश्चितो भवति। अन्यथा शास्त्रे सम्बधान्तराभावेन पूर्वोक्तेष्वेकतराङ्गीकारे तत्र स्वमुखोक्तदूषणानां स्वसिद्धान्त एवापातादतो नान्यः पक्षः परिग्रहीतुं शक्यते। तस्मादकामैरपि चिदचिदीश्वराणां स्वाभाविकभेदाभेदमेव सम्बन्धमङ्गीकृत्य पुनर्विशिष्टत्वाङ्गीकारो गौरवावहोऽप्यनुपपन्नोऽपि स्वसंप्रदायस्य स्वातन्त्र्यसिद्ध्यर्थ इति सिद्धम् । अलं विस्तरेण ॥

इति श्रीसनत्कुमारनारदसंप्रदायप्रवर्त्तकाद्याचार्यश्रीभगवन्नियमानन्दानुयायिना अनन्तरामेण विरचितो वेदान्ततत्त्वबोधः समाप्तः ॥

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयै, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकं " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्र्यमाणा ग्रन्था:- मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता (संस्कारः) २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः (व्याकरणम्) १०

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम्। (मीमांसा) १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम्। स० (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १

(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० स० (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम्। सम्पूर्णः। (वेदान्तः) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। (जैनदर्शनम्) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णम् (वेदान्तः) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। } (मीमांसा

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। } (वेदान्त

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशाध्यायार्थसंग्रहः) श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। } (मीमांसा

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि मीमांसादर्शनम्) महोपाध्यायश्रीशालिकनाथमिश्रविरचितम्। श्रीशङ्कर... कृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्द... प्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम्।

( ) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् (वेदान्तः)

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया (विद्यासागरी) ति प्रसिद्धया समेतम्। } (वेदान्त

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता।

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम्। }

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता। (वेदा

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविर... तानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्य... मानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य श... क्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि। (न्याय

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् श्रीसुन्दरभट्टरचितसिद्धान्तसेतु... टीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीव्याख्यया...

(२७) षड्दर्शनसमुच्चयः। बौद्ध नैयायिक कापिलय जैन वैशेषि... जैमिनीयदर्शन संक्षेपः। मणिभद्रकृतटीकया सहितः। हरि... भद्रसूरिकृतः।

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णव...

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका।

(३०) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः।

(३१) स्मृतिसारोद्धारः। विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः।

(३२) वेदान्तरत्नमञ्जुषा। श्रीभगवत्पुरुषोत्तमाचार्य कृता।

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
बनारस सिटी